दृꣳहन्तां दुर्याः पृथिव्यामुर्वन्तरिक्षमन्वेमि ।
पृथिव्यास्त्वा नाभौ सादयाम्यदित्या उपस्थे । अग्ने हव्यꣳ रक्षस्व ॥८॥ (३) १५

पवित्रे स्थो वैष्णव्यौ सवितुर्वः प्रसव उत्पुनामि । अच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ॥१॥ १६
देवीरापो अग्रेगुवो अग्रेपुवः । अग्र इममद्य यज्ञं नयत सुधातुं यज्ञपतिं देवायुवम् ॥२॥ १७
युष्मा इन्द्रोऽवृणीत वृत्रतूर्ये यूयमिन्द्रमवृणीध्वं वृत्रतूर्ये प्रोक्षिता स्थ ।
अग्नये त्वा जुष्टं प्रोक्षाम्यग्नीषोमाभ्यां त्वा जुष्टं प्रोक्षामि ॥३॥ १८
दैव्याय कर्मणे शुन्धध्वं देवयज्यायै । यद्वोऽशुद्धः पराजघानैतद्वस्तच्छुन्धामि ॥४॥(४)१९

शर्मास्यवधूतꣳ रक्षोऽवधूता अरातयः । अदित्यास्त्वगसि प्रति त्वादितिर्वेत्तु ॥१॥ २०
अद्रिरसि वानस्पत्यो ग्रावासि पृथुबुध्नः । प्रति त्वादित्यास्त्वग्वेत्तु ॥२॥ २१
अग्नेस्तनूरसि वाचो विसर्जनम् । देववीतये त्वा गृह्णामि ॥३॥ २२
बृहन् ग्रावासि वानस्पत्यः स इदं देवेभ्यः । हव्यꣳ शमीष्व सुशमि शमीष्व हविष्कृदेहि ॥४॥ २३
कुक्कुटोऽसि मधुजिह्व इषमूर्जमावद । वयꣳ संघाते संघाते जेष्म ॥५॥ २४
वर्षवृद्धमसि प्रति त्वा वर्षवृद्धं वेत्तु । परापूतꣳ रक्षः परापूता अरातयः ॥६॥ २५
अपहतꣳ रक्षो वायुर्वो विविनक्तु ।
देवो वः सविता प्रतिगृह्णातु हिरण्यपाणिरच्छिद्रेण पाणिना ॥७॥ (५) २६

धृष्टिरस्यपाग्ने अग्निमामादं जहि । निष्क्रव्यादꣳ सेधा देवयजं वह ॥१॥ २७
ध्रुवमसि पृथिवीं दृꣳह ॥
ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि द्विषतो वधाय ॥२॥ २८
अग्ने ब्रह्म गृभ्णीष्व धरुणमस्यन्तरिक्षं दृꣳह ।
ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि द्विषतो वधाय ।
धर्त्रमसि दिवं दृꣳह । ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि द्विषतो वधाय ॥३॥ २९
विश्वाभ्यस्त्वाशाभ्य उपदधामि द्विषतो वधाय ।
चित स्थोर्ध्वचितो भृगूणामङ्गिरसां तपसा तप्यध्वम् ॥४॥ (६) ३०

शर्मास्यवधूतꣳ रक्षोऽवधूता अरातयः । अदित्यास्त्वगसि प्रति त्वादितिर्वेत्तु ॥१॥ ३१
धिषणासि पर्वती प्रति त्वादित्यास्त्वग्वेत्तु ।
दिवस्कम्भन्यसि धिषणासि पार्वतेयी प्रति त्वा पर्वती वेत्तु ॥२॥ ३२ [११]

धान्यमसि धिनुहि देवान् धिनुहि यज्ञं धिनुहि यज्ञपतिम् । धिनुहि माँ यज्ञन्यम् ॥३॥ ३३
प्राणाय त्वोदानाय त्वा व्यानाय त्वा । दीर्घामनु प्रसितिमायुषे धां ।
देवो वः सविता प्रतिगृह्णातु हिरण्यपाणिराच्छिद्रेण पाणिना । चक्षुषे त्वा महीनां पयोसि ॥४॥ ३४
वेदोसि वेद येन त्वं देव वेद देवेभ्यो वेदोऽभवः । तेन मह्यं वेदो भव ॥५॥(७) ३५

देवस्य त्वा सवितुः प्रसवेश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ।
सं वपामि समाप ओषधीभिः समोषधयो रसेन ।
सꣳ रेवतीर्जगतीभिः सं मधुमतीर्मधुमतीभिः पृच्यन्ताम् ।
जनयत्यै त्वा सं यौमि ॥१॥ ३६

इदमग्नेरिदमग्नीषोमयोरिषे त्वा । घर्मोसि विश्वायुरुरुप्रथा उरु प्रथस्वोरु ते यज्ञपतिः प्रथताम् ॥२॥ ३७
अग्निष्टे त्वचं मा हिꣳसीदन्तरितꣳ रक्षोन्तरिता अरातयः ।
देवस्त्वा सविता श्रपयतु वर्षिष्ठेऽधि नाके ॥३॥ ३८
मा भेर्मा सं विक्था अतमेरुर्यज्ञोऽतमेरुर्यजमानस्य प्रजा भूयात् ॥
त्रिताय त्वा द्विताय त्वैकताय त्वा ॥४॥(८) ३९

देवस्य त्वा सवितुः प्रसवेश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । आददेऽध्वरकृतं देवेभ्यः ।
इन्द्रस्य बाहुरसि दक्षिणः सहस्रभृष्टिः शततेजाः । वायुरसि तिग्मतेजा द्विषतो वधः ॥१॥ ४०
पृथिव्यै वर्मासि पृथिवि देवयजनि । ओषध्यास्ते मूलं मा हिꣳसिषम् ॥२॥ ४१
व्रजं गच्छ गोष्ठानं वर्षतु ते द्यौर्बधान देव सवितः परमस्यां पृथिव्याꣳ शतेन पाशैः ।
योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौक् ॥३॥ ४२
अपाररुं वध्यासं पृथिव्यै देवयजनात् ।
व्रजं गच्छ गोष्ठानं वर्षतु ते द्यौर्बधान देव सवितः परमस्यां पृथिव्याꣳ शतेन पाशैः ।
योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौक् । अररो दिवं मा पप्तो द्रप्सस्ते द्यां मा स्कन् ।
व्रजं गच्छ गोष्ठानं वर्षतु ते द्यौर्बधान देव सवितः परमस्यां पृथिव्याꣳ शतेन पाशैः ।
योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौक् ॥४॥ ४३
गायत्रेण त्वा छन्दसा परिगृह्णामि त्रैष्टुभेन त्वा छन्दसा परिगृह्णामि जागतेन त्वा छन्दसा परिगृह्णामि।
सुक्ष्मा चासि शिवा चासि स्योना चासि सुषदा चासि । ऊर्जस्वती चासि पयस्वती च ॥५॥ ४४
पुरा क्रूरस्य विसृपो विरप्शिन्नुदादाय पृथिवीं जीवदानुम् ।
यामैरयꣳश्चन्द्रमसि स्वधाभिस्तां धीरासो अनुदिश्य यजन्ते । द्विषतो वधोऽसि ॥६॥(९)४५ [९५]

प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयो निष्टप्तꣳ रक्षो निष्टप्ता अरातयः ।
अनिशितोऽसि सपत्नक्षिद्वाजिनं त्वा वाजेध्यायै सम्मार्ज्मि ।
प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयो निष्टप्तꣳ रक्षो निष्टप्ता अरातयः ।
अनिशितासि सपत्नक्षिद्वाजिनीं त्वा वाजेध्यायै सम्मार्ज्मि ॥१॥ ४६
अदित्यै रास्नासीन्द्राण्यै संनहनम् । विष्णोर्वेष्पोऽस्यूर्जे त्वादब्धेन त्वा चक्षुषावपश्यामि ॥२॥ ४७
अग्नेर्जिह्वासि सुभूर्देवेभ्यः । धाम्ने धाम्ने भव यजुषे यजुषे । सवितुस्त्वा प्रसव उत्पुनाम्यच्छिद्रेण
पवित्रेण सूर्यस्य रश्मिभिः । सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ॥३॥४८
तेजोऽसि शुक्रमस्यमृतमसि धाम नामासि । प्रियं देवानामनाधृष्टं देवयजनम् ॥४॥ ४९
यस्ते प्राणः पशुषु प्रविष्टो देवानां विष्ठामनु यो वितस्थे ।
आत्मन्वान्त्सोमघृतवान्हि भूत्वाग्निं गच्छ स्वर्यजमानाय विन्द ॥ ५ ॥(१०) ५०

॥ इषे त्वा तिस्रः ॥ ३ ॥ द्यौरसि चतस्रः ॥ ४ ॥ अग्ने व्रतपतेऽष्ट ॥ ८ ॥ पवित्रे स्थ चतस्रः ॥ ४ ॥ शर्मासि सप्त ॥ ७ ॥ धृष्टिरसि चतस्रः ॥ ४ ॥ शर्मासि पुनः पञ्च ॥ ५ ॥ देवस्य त्वा चतस्रः ॥ ४ ॥ द्वितीयो देवस्य त्वा षट् ॥ ६ ॥ प्रत्युष्टं पञ्च ॥ ५ ॥ दशानुवाकेषु पञ्चाशत् ॥ ५० ॥ इषे देवस्य समाः पञ्चाशत् ॥ ५० ॥

॥ इति शुक्लयजुःकाण्वसंहितायां प्रथमोऽध्यायः ॥१॥

## अथ द्वितीयोऽध्यायः ॥

कृष्णोऽस्याखरेष्ठोऽग्नये त्वा जुष्टं प्रोक्षामि वेदिरसि बर्हिषे त्वा जुष्टां प्रोक्षामि ।
बर्हिरसि स्रुग्भ्यस्त्वा जुष्टं प्रोक्षामि ॥१॥ १
अदित्यै व्युन्दनमसि विष्णो स्तुपोऽसि । ऊर्णम्रदसं त्वा स्तृणामि स्वासस्थां देवेभ्यः ॥२॥ २
भूपतये स्वाहा भुवनपतये स्वाहा भूतानां पतये स्वाहा ।
गन्धर्वस्त्वा विश्वावसुः परिदधातु विश्वस्यारिष्ट्यै ॥३॥ ३
यजमानस्य परिधिरस्यग्निरिळ ईळितः । इन्द्रस्य बाहुरसि दक्षिणो विश्वस्यारिष्ट्यै ।
यजमानस्य परिधिरस्यग्निरिळ ईळितः । मित्रावरुणौ त्वोत्तरतः परिधत्तां ध्रुवेण धर्मणा विश्वस्यारिष्ट्यै ।
यजमानस्य परिधिरस्यग्निरिळ ईळितः ॥४॥ ४
वीतिहोत्रं त्वा कवे द्युमन्तꣳ समिधीमहि । अग्ने बृहन्तमध्वरे ॥५॥ ५
समिदसि सूर्यस्त्वा पुरस्तात् पातु कस्याश्चिदभिशस्त्यै । सवितुर्बाहू स्थः ॥६॥ ६
ऊर्णम्रदसं त्वा स्तृणामि स्वासस्थं देवेभ्यः । आ त्वा वसवो रुद्रा आदित्याः सदन्तु ॥७॥ ७
घृताच्यसि जुहूर्नाम सेदं प्रियेण धाम्ना प्रिये सदसि सीद । घृताच्यस्युपभृन्नाम सेदं प्रियेण
धाम्ना प्रिये सदसि सीद । घृताच्यसि ध्रुवा नाम सेदं प्रियेण धाम्ना प्रिये सदसि सीद ।
प्रियेण धाम्ना प्रिये सदसि सीद ॥८॥ ८ [५८]

ध्रुवा असदन्नृतस्य योनौ ता विष्णो पाहि ।
पाहि यज्ञं पाहि यज्ञपतिं पाहि मां यज्ञन्यम् ॥९॥ (१) ९

अग्ने वाजजिद्वाजं त्वा सरिष्यन्तं वाजजितꣳ सम्मार्ज्मि ।
नमो देवेभ्यः स्वधा पितृभ्यः सुयमे मे भूयास्तम् ॥ १ ॥ १०
अस्कन्नमद्याज्यं देवेभ्यः संभ्रियासम् । अङ्घ्रिणा विष्णो मा त्वावक्रमिषम् ॥२॥ ११
वसुमतीमग्ने ते छायामुपस्थेयं विष्णोः स्थानमसि । इत इन्द्रो वीर्यमकृणोदूर्ध्वोऽध्वर आस्थात्॥३॥ १२
अग्ने वेर्होत्रं वेर्दूत्यम् । अवतां त्वा द्यावापृथिवी अव त्वं द्यावापृथिवी ॥४॥ १३
स्विष्टकृद्देवेभ्य इन्द्र आज्येन हविषा भूत् स्वाहा । सं ज्योतिषा ज्योतिः ॥५॥ १४
अग्ने पितरो मादयध्वं यथाभागमावृषायध्वम् । अमी मदन्त पितरो यथाभागमावृषायिषत ॥६॥ १५
उपहूता पृथिवी मातोप मां पृथिवी माता ह्वयताम् । अग्निराग्नीध्रात् स्वाहा ॥७॥ १६
उपहूतो द्यौष्पितोप मां द्यौष्पिता ह्वयताम् । अग्निराग्नीध्रात् स्वाहा ॥८॥ १७
मयीदमिन्द्र इन्द्रियं दधात्वस्मान् रायो मघवानः सचन्ताम् ।
अस्माकꣳ सन्त्वाशिषः सत्या नः सन्त्वाशिषः ।
अग्ने वाजजिद्वाजं त्वा ससृवाꣳसं वाजजितꣳ सम्मार्ज्मि ॥९॥ (२) १८

देव सवितरेतं त्वा वृणते बृहस्पतिं ब्रह्माणम् । तदहं मनसे प्रब्रवीमि ॥१॥ १९
मनो गायत्र्यै गायत्री त्रिष्टुभे त्रिष्टुब्जगत्यै जगत्यनुष्टुभे ।
अनुष्टुप्प्रजापतये प्रजापतिर्विश्वेभ्यो देवेभ्यः ॥२॥ २०
बृहस्पतिर्देवानां ब्रह्माहं मनुष्याणाम् । भूर्भुवः स्वर्निरस्तः पाप्मेदमहं बृहस्पतेः सदसि सीदामि ॥३॥ २१
मित्रस्य त्वा चक्षुषा प्रतीक्षे । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ।
प्रतिगृह्णामि पृथिव्यास्त्वा नाभौ सादयाम्यदित्या उपस्थे ।
देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ॥४॥ २२
आददेऽग्नेष्ट्वास्येन प्राश्नामि बृहस्पतेर्मुखेन । या अप्स्वन्तर्देवतास्ता इदꣳ शमयन्तु ॥५॥ २३
स्वाहाकृतं जठरमिन्द्रस्य गच्छ । घसिना मे मा संपृक्था ऊर्ध्वं मे नाभेः सीद ॥६॥ २४
इन्द्रस्य त्वा जठरे सादयामि । प्रजापतेर्भागोस्यूर्जस्वान् पयस्वान् ॥७॥ २५
प्राणापानौ मे पाहि समानव्यानौ मे पाह्युदानव्यानौ मे पाहि ।
ऊर्गस्यूर्जं मयि धेह्यक्षितिरसि मा मे क्षेष्ठा अमुत्रामुष्मिंल्लोक इह च ॥८॥ २६
एषा ते अग्ने समित्तया वर्धस्व चा च प्यायस्व । वर्धिषीमहि च वयमा च प्यासिषीमहि ॥९॥ २७

एतत् ते देव सवितर्यज्ञं प्राहुर्बृहस्पतये ब्रह्मणे । तेन यज्ञमव तेन यज्ञपतिं तेन मामव ॥१०॥ २८
मनोज्योतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोतु ।
अरिष्टं यज्ञꣳ समिमं दधातु विश्वे देवास इह मादयन्तामों प्रतिष्ठ ॥११॥ (३) २९

अग्नीषोमयोरुज्जितिमनूज्जेषं वाजस्य मा प्रसवेन प्रोहामि ।
अग्नीषोमौ तमपनुदतां योऽस्मान् द्वेष्टि यं च वयं द्विष्मो वाजस्यैनं प्रसवेनापोहामि ।
इन्द्राग्न्योरुज्जितिमनूज्जेषं वाजस्य मा प्रसवेन प्रोहामि ।
इन्द्राग्नी तमपनुदतां योऽस्मान् द्वेष्टि यं च वयं द्विष्मो वाजस्यैनं प्रसवेनापोहामि ॥१॥ ३०
वसुभ्यस्त्वा रुद्रेभ्यस्त्वादित्येभ्यस्त्वा संजानाथां द्यावापृथिवी मित्रावरुणौ त्वा वृष्ट्यावताम् ॥२॥ ३१
व्यन्तु वयोक्तꣳ रिहाणा मरुतां पृषतीर्गच्छ । वशा पृश्निर्भूत्वा दिवं गच्छ ततो नो वृष्टिमावह ॥३॥ ३२
चक्षुष्पा असि चक्षुर्मे पाहि । यं परिधिं पर्यधत्था अग्ने देव पणिभिर्गुह्यमानः ॥४॥ ३३
तं त एतमनु जोषं भराम्येष नेत्त्वदपचेतयातै । अग्नेः प्रियं पाथोऽपीतम् ॥५॥ ३४
सꣳस्रवभागा स्थेषा बृहन्तः प्रस्तरेष्ठाः परिधेयाश्च देवाः ।
इमां वाचमभि विश्वे गृणन्त आसद्यास्मिन् बर्हिषि मादयध्वꣳ स्वाहा वाट् ।
घृताची स्थो धुर्यौ पातꣳ सुम्ने स्थः सुम्ने मा धत्तम् ॥६॥ (४) ३५

अग्नेऽदब्धायोऽशीतम पाहि मा दिद्योः पाहि प्रसित्यै पाहि दुरिष्ट्यै पाहि दुरद्मन्यै ।
अविषं नः पितुं कृणु सुषदा योनौ स्वाहा वाट् ॥१॥ ३६
अग्नये संवेशपतये स्वाहा सरस्वत्यै यशोभगिन्यै स्वाहा ।
उलूखले मुसले यच्च शूर्पे आशिश्लेष दृषदि यत् कपाले ॥२॥ ३७
उत्प्रुषो विप्रुषः सं जुहोमि सत्याः सन्तु यजमानस्य कामाः स्वाहा ।
आप्यायतां ध्रुवा हविषा घृतेन यज्ञं यज्ञं प्रति देवयद्भ्यः ॥
सूर्याया ऊधो अदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन् ॥३॥ ३८
देवा गातुविदो गातुमित्वा गातुमित । मनसस्पत इमं देव यज्ञꣳ स्वाहा वाते धाः ॥४॥ ३९
संबर्हिरङ्क्ताꣳ हविषा घृतेन समादित्यैर्वसुभिः सं मरुद्भिः ।
समिन्द्रो विश्वदेवेभिरङ्क्तां दिव्यं नभो गच्छतु यत् स्वाहा ॥५॥ ४०
कस्त्वा विमुञ्चति स त्वा विमुञ्चति कस्मै त्वा विमुञ्चति तस्मै त्वा विमुञ्चति ।
पोषाय रक्षसां भागोऽसि ॥६॥ ४१
वेषोऽस्युपवेषो द्विषतो ग्रीवा उपनेविड्ढि । वेशौ अग्ने सुभग धारयेह ॥७॥ ४२ [१२]

ऋद्धाः कर्मण्या अनपायिनो यथासन् ॥
जुहोमि त्वा सुभग सौभगाय पुरुतमं पुरुहूत श्रवस्यन् ॥८॥(५) ४३

सं वर्चसा पयसा सं तनूभिरगन्महि मनसा सꣳ शिवेन ।
त्वष्टा सुदत्रो विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्टम् ॥१॥ ४४
यद्ध शं च त उप च । शिवे मे संतिष्ठस्वारिष्टे मे संतिष्ठस्व स्विष्टे मे संतिष्ठस्व ॥२॥ ४५
दिवि विष्णुर्व्यक्रꣳस्त जागतेन छन्दसा ततो निर्भक्तः । योऽस्मान् द्वेष्टि यं च वयं द्विष्मः ।
अन्तरिक्षे विष्णुर्व्यक्रꣳस्त त्रैष्टुभेन छन्दसा ततो निर्भक्तः । योऽस्मान् द्वेष्टि यं च वयं द्विष्मः ।
पृथिव्यां विष्णुर्व्यक्रꣳस्त गायत्रेण छन्दसा ततो निर्भक्तः ।
योऽस्मान् द्वेष्टि यं च वयं द्विष्मः ॥३॥ ४६
अस्मादन्नादस्यै प्रतिष्ठाया अगन्म स्वः । सं ज्योतिषाभूम ॥४॥ ४७
स्वयंभूरसि श्रेष्ठो रश्मिर्वर्चोदा असि वर्चो मे देहि । सूर्यस्यावृतमन्वावर्ते ॥५॥ ४८
अग्ने गृहपते सुगृहपतिरहं त्वया गृहपत्या भूयासम् ।
सुगृहपतिस्त्वं मया गृहपत्या भूयाः ॥६॥ ४९
अस्थूरि णो गार्हपत्यानि सन्तु शतꣳ हिमाः ।
तिग्मेन नस्तेजसा सꣳशिशाधि सूर्यस्यावृतमन्वावर्ते ॥७॥ ५०
उरुविष्णो विक्रमस्वोरुक्षयाय नस्कृधि । घृतं घृतयोने पिब प्र-प्र यज्ञपतिं तिर ॥८॥ ५१
तवोऽसि तंतुरस्यनु मा तनुहि । अस्मिन्यज्ञेस्याꣳ साधु कृत्यायामस्मिन्नन्नेऽस्मिँल्लोके ॥९॥५२
इदं मे कर्मेदं वीर्यं पुत्रोऽनु संतनोतु । अग्ने व्रतपते व्रतमचारिषं तदशकं तन्मेऽराधि ।
इदमहं य एवास्मि स एवास्मि ॥१०॥(६) ५३

अग्नये कव्यवाहनाय स्वाहा सोमाय पितृमते स्वाहा । अपहता असुरा रक्षाꣳसि वेदिषदः ॥१॥ ५४
ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति ।
परापुरो निपुरो ये भरन्त्यग्निष्टाँल्लोकात् प्रणुदात्यस्मात् ॥२॥ ५५
अत्र पितरो मादयध्वं यथाभागमावृषायध्वम् । अमीमदन्त पितरो यथाभागमावृषायिषत ॥३॥ ५६
नमो वः पितरः शुष्माय नमो वः पितरस्तपसे ।
नमो वः पितरो यज्जीवं तस्मै नमो वः पितरो रसाय ।
नमो वः पितरो घोराय मन्यवे स्वधायै वः पितरो नमः ।
एतद्वः पितरो वासो गृहान्नः पितरो दत्त ॥ ४ ॥ ५७[१०७]

उदायुषा स्वायुषोत्पर्जन्यस्य धामभिः । उदस्थामामृताँ अनु ॥५॥ ५८
आवत्त पितरो गर्भं कुमारं पुष्करस्रजम् । यथेह पुरुषोऽसत् ॥६॥ ५९
ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम् ।
स्वधा स्थ तर्पयत मे पितॄन् ॥७॥ (७) ६०

कृष्णोऽसि नव ॥ ९ ॥ अग्ने वाजजिन्नव ॥ ९ ॥ देव सवितरेकादश ॥ ११ ॥ अग्नीषोमयोः षट् ॥ ६ ॥
अग्नेऽदब्धायोऽष्ट ॥ ८ ॥ सं वर्चसा दश ॥ १० ॥ अग्नये कव्यवाहनाय सप्त ॥ ७ ॥
सप्तानुवाकेषु षष्टि ॥ ६० ॥ कृष्ण इमं मे षष्टि ॥ ६ ॥
इति शुक्लयजुःकाण्वसंहितायां द्वितीयोऽध्यायः ॥ २ ॥

## अथ तृतीयोऽध्यायः ॥

समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम् । आस्मिन् हव्या जुहोतन ॥१॥ १
सुसमिद्धाय शोचिषे घृतं तीव्रं जुहोतन । अग्नये जातवेदसे ॥२॥ २
तं त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि । बृहच्छोचा यविष्ठ्य ॥३॥ ३
उप त्वाग्ने हविष्मतीर्घृताचीर्यन्तु हर्यत । जुषस्व समिधो मम ॥४॥ ४
भूर्भुवः स्वर्द्यौरिव भूम्ना भूमिरिव वरिम्णा ।
तस्यास्ते पृथिवि देवयजनि पृष्ठेग्निमन्नादमन्नाद्यायादधे ॥५॥ ५
आयं गौः पृश्निरक्रमीदसदन् मातरं पुरः । पितरं च प्रयन्त्स्वः ॥६॥ ६
अन्तश्चरति रोचनास्य प्राणादपानती । व्यख्यन् महिषो दिवम् ॥७॥ ७
त्रिꣳशद्धाम विराजति वाक् पतङ्गाय धीयते । प्रति वस्तोरह द्युभिः ॥८॥ (१) ८

अग्निर्ज्योतिषं त्वा वायुमतीं प्राणवतीम् । स्वर्ग्याꣳ स्वर्गायोपदधामि भास्वतीम् ।
अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा ॥१॥ ९
सूर्यं ज्योतिषं त्वा वायुमतीं प्राणवतीम् । स्वर्ग्याꣳ स्वर्गायोपदधामि भास्वतीम् ।
सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा ॥२॥ १०
सजूर्देवेन सवित्रा सजू रात्र्येन्द्रवत्या । जुषाणो अग्निर्वेतु स्वाहा ॥३॥ ११
सजूर्देवेन सवित्रा सजूरुषसेन्द्रवत्या । जुषाणः सूर्यो वेतु स्वाहा ॥ ४ ॥ १२
इह पुष्टिं पुष्टिपतिर्दधात्विह प्रजाꣳ रमयतु प्रजापतिः । अग्नये गृहपतये रयिमते पुष्टिपतये स्वाहा ।
अग्नयेऽन्नादायान्नपतये स्वाहा ॥५॥ १३
अनमित्रं मे अधरागनमित्रमुदक्कृधि । इन्द्रानमित्रं पश्चान्मेनमित्रं पुरस्कृधि ॥६॥ १४ [१२४]

इन्द्रः पश्चादिन्द्रः पुरस्तादिन्द्रो अस्माँ३ अभिपातु विश्वतः ।
इन्द्रो जिघांꣳसतां मनांꣳसि विषूचीना व्यस्यतात् ॥७॥ १५
समिदसि समिद्धो मे अग्ने दीदिहि । समेद्धा ते अग्ने दीद्यासम् ॥८॥(२) १६

उपप्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये । आरे अस्मे च शृण्वते ॥१॥ १७
अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपाꣳ रेताꣳसि जिन्वति ॥२॥ १८
उभा वामिन्द्राग्नी आहुवध्या उभा राधसः सह मादयध्यै ।
उभा दातारा इषाꣳ रयीणामुभा वाजस्य सातये हुवे वाम् ॥३॥ १९
अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः ।
तं जानन्नग्न आरोहाथा नो वर्धया रयिम् ॥४॥ २०
अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठो अध्वरेष्वीड्यः ।
यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशेविशे ॥५॥ २१
अस्य प्रत्नामनु द्युतꣳ शुक्रं दुदुह्रे अह्रयः । पयः सहस्रसामृषिम् ॥६॥ २२
तनूपा अग्नेऽसि तन्वं मे पाह्यायुर्दा अग्नेऽस्यायुर्मे देहि । वर्चोदा अग्नेऽसि वर्चो मे देहि ॥७॥ २३
अग्ने यन्मे तन्वा ऊनं तन्म आपृण । इन्धानास्त्वा शतꣳ हिमा द्युमन्तꣳ समिधीमहि ॥८॥ २४
वयस्वन्तो वयस्कृतꣳ सहस्वन्तः सहस्कृतम् । अग्ने सपत्नदम्भनमदब्धासो अदाभ्यम् ॥९॥ २५
चित्रावसो स्वस्ति ते पारमशीय । सं त्वमग्ने सूर्यस्य वर्चसागथाः समृषीणाꣳ स्तुतेन ॥१०॥ २६
सं प्रियेण धाम्ना समहमायुषा सं वर्चसा सं प्रजया सꣳ रायस्पोषेण ग्मिषीय ।
अन्ध स्थान्धो वो भक्षीय मह स्थ महो वो भक्षीय ॥११॥ २७
ऊर्ज स्थोर्जं वो भक्षीय रायस्पोष स्थ रायस्पोषं वो भक्षीय ।
रेवती रमध्वमस्मिन् योनावस्मिन् गोष्ठेऽस्मिन् क्षयेऽस्मिँल्लोके ॥१२॥ २८
इहैव स्तेतो मापगात । सꣳहितासि विश्वरूप्यूर्जा माविश गौपत्येन ॥१३॥ २९
उप त्वाग्ने दिवेदिवे दोषावस्तर्धिया वयम् । नमो भरन्त एमसि ॥१४॥ ३०
राजन्तमध्वराणां गोपामृतस्य दीदिविम् । वर्धमानꣳ स्वे दमे ॥१५॥ ३१
स नः पितेव सूनवेऽग्ने सूपायनो भव । सचस्वा नः स्वस्तये ॥१६॥ ३२
अग्ने त्वं नो अन्तम उत त्राता शिवो भवा वरूथ्यः ।
वसुरग्निर्वसुश्रवा अच्छा नक्षि द्युमत्तमꣳ रयिं दाः ॥१७॥ ३३ [१४३]

तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः ।
स नो बोधि श्रुधी हवमुरुष्या णो अघायतः समस्मात् ॥१८॥ ३४
इळ एह्यदित एहि काम्या एहि । मयि वः कामधरणं भूयात् ॥१९॥ ३५
सोमानꣳ स्वरणं कृणुहि ब्रह्मणस्पते । कक्षीवन्तं य औशिजः ॥२०॥ ३६
यो रेवान्यो अमीवहा वसुवित् पुष्टिवर्धनः । स नः सिषक्तु यस्तुरः ॥२१॥ ३७
मा नः शꣳसो अररुषो धूर्तिः प्रणङ्मर्त्यस्य । रक्षा णो ब्रह्मणस्पते ॥२२॥ ३८
महि त्रीणामवोऽस्तु द्युक्षं मित्रस्यार्यम्णः । दुराधर्षं वरुणस्य ॥२३॥ ३९
नहि तेषाममा चन नाध्वसु वारणेषु । ईशे रिपुरघशꣳसः ॥२४॥ ४०
ते हि पुत्रासो अदितेः प्र जीवसे मर्त्याय । ज्योतिर्यच्छन्त्यजस्रम् ॥२५॥ ४१
कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे ।
उपोपेन्नु मघवन् भूय इन्नु ते दानं देवस्य पृच्यते ॥२६॥ ४२
तत् सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥२७॥ ४३
परि ते दूळभो रथोऽस्माँ२ अश्नोतु विश्वतः । येन रक्षसि दाशुषः ॥
समिद्धो मासमर्धय प्रजया च धनेन च ॥२८॥ (३) ४४

भूर्भुवः स्वः सुप्रजाः प्रजया भूयासम् । सुवीरो वीरैः सुपोषः पोषैः ॥१॥ ४५
नर्य प्रजां मे पाहि शꣳस्य पशून् मे पाहि । आगन्म विश्ववेदसमस्मभ्यं वसुवित्तमम् ॥२॥ ४६
अग्ने सम्राळभि द्युम्नमभि सह आयच्छस्व । अयमग्निर्गृहपतिर्गार्हपत्यः प्रजावान्वसुवित्तमः ॥३॥ ४७
अग्ने गृहपतेऽभि द्युम्नमभि सह आयच्छस्व । गृहा मा बिभीत मा वेपध्वमूर्जं बिभ्रत एमसि॥४॥ ४८
ऊर्जं बिभ्रद्वः सुमनाः सुमेधा गृहानैमि मनसा मोदमानः ।
येषामध्येति प्रवसन्येषु सौमनसो बहुः ॥५॥ ४९
गृहानुपह्वयामहे ते नो जानन्तु जानतः । उपहूता इह गाव उपहूता अजावयः ॥६॥ ५०
अथो अन्नस्य कीलाल उपहूतो गृहेषु नः । क्षेमाय वः शान्त्यै प्रपद्ये ।
शिवꣳ शग्मꣳ शंयोः शंयोः ॥७॥ (४) ५१

प्रघासिनो हवामहे मरुतश्च रिशादसः । करम्भेण सजोषसः ॥१॥ ५२
यद् ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये । यदेनश्चकृमा वयमिदं तदवयजामहे स्वाहा ॥२॥ ५३
मो षू ण इन्द्रात्र पृत्सु देवैरस्ति हि ष्मा ते शुष्मिन्नवयाः ।
महश्चिद्यस्य मीळ्हुषो यव्या हविष्मतो मरुतो वन्दते गीः ॥३॥ ५४[१६४]

अक्रन् कर्म कर्मकृतः सह वाचा मयोभुवा । देवेभ्यः कर्म कृत्वास्तं प्रेत सचाभुवः ॥४॥ ५५
अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः ।
अव देवैर्देवकृतमेनोऽयासिषमव मर्त्यैर्मर्त्यकृतं पुरुराव्णो देव रिषस्पाहि ॥५॥ (५) ५६

पूर्णा दर्वि परा पत सुपूर्णा पुनरापत । वस्नेव विक्रीणावहा इषमूर्जꣳ शतक्रतो ॥१॥ ५७
देहि मे ददामि ते नि मे धेहि नि ते दधे ।
निहारं निहरामि ते निहारं निहरासि मे स्वाहा ॥२॥ (६) ५८

अक्षन्नमीमदन्त ह्यव प्रिया अधूषत ।
अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजा न्विन्द्र ते हरी ॥१॥ ५९
सुसंदृशं त्वा वयं मघवन् वन्दिषीमहि ।
प्र नूनं पूर्णवन्धुर स्तुतो यासि वशाँ२ अनु योजा न्विन्द्र ते हरी ॥२॥ ६०
मनो न्वाहुवामहे नाराशꣳसेन स्तोमेन । पितृणां च मन्मभिः ॥३॥ ६१
आ न एतु मनः पुनः क्रत्वे दक्षाय जीवसे । ज्योक् च सूर्यं दृशे ॥४॥ ६२
पुनर्नः पितरो मनो ददातु दैव्यो जनः । जीवं व्रातꣳ सचेमहि ॥५॥ ६३
वयꣳ सोम व्रते तव मनस्तनूषु विभ्रतः । प्रजावन्तः सचेमहि ॥६॥ (७) ६४

एष ते रुद्र भागः सह स्वस्राम्बिकया तं जुषस्व स्वाहा । एष ते रुद्र भाग आखुस्ते पशुः ॥१॥ ६५
अव रुद्रमदीमह्यव देवं त्र्यम्बकम् ।
यथा नो वस्यसस्करद्यथा नः श्रेयसस्करद्यथा नो व्यवसाययात् ॥२॥ ६६
भेषजमसि भेषजं गवेऽश्वाय पुरुषाय भेषजम् । सुगं मेषाय मेष्यै ॥३॥ ६७
त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥४॥ ६८
त्र्यम्बकं यजामहे सुगन्धिं पतिवेदनम् । उर्वारुकमिव बन्धनादितो मुक्षीय मामुतः ॥५॥ ६९
एतत्ते रुद्रावसं तेन परो मूजवतोऽतीहि ।
अवततधन्वा पिनाकावसः कृत्तिवासा अहिꣳसन्नः शिवः शान्तोऽतीहि ॥६॥ (८) ७०

वाजिनां वाजोऽवतु भक्षो अस्मान् रेतः सिक्तममृतं बलाय ।
विश्वे देवा अभि यत् संबभूवुस्तन्मा धिनोतु प्रजया धनेन ॥१॥ ७१
वाज्यहं वाजिनस्योपहूत उपहूतस्य भक्षयामि । वाजे वाजी भूयासम् ॥२॥ ७२
सवित्रा प्रसूता दैव्या आप उदन्तु ते तनूम् । दीर्घायुत्वाय वर्चसे ॥३॥ ७३ (१८३)

कश्यपस्य त्र्यायुषं जमदग्नेस्त्र्यायुषम् । यद्देवानां त्र्यायुषं तन्मे अस्तु त्र्यायुषम् ॥४॥ ७४
येन धाता बृहस्पतेरिन्द्रस्य चायुषेऽवपत् । तेन ते वपामि ब्रह्मणा जीवातवे जीवनाय ॥५॥ ७५
दीर्घायुत्वाय बलाय वर्चसे । सुप्रजास्त्वाय चासा अथो जीव शरदः शतम् ॥६॥ (९) ७६ [१८६]

समिधाग्निमष्ट ॥ ८ ॥ अग्निर्ज्योतिषं त्वाष्ट ॥ ८ ॥ उपप्रयन्तोऽष्टाविंशतिः ॥ २८ ॥ भूर्भुवः स्वः सप्त ॥ ७ ॥ प्रघासिनः पञ्च ॥ ५ ॥ पूर्णा दर्वि द्वे ॥ २ ॥ अक्षन्नमीमदन्त षट् ॥ ६ ॥ एष ते च षट् ॥ ६ ॥ वाजिनां वाजश्च षट् ॥ ६ ॥ नवानुवाकेषु षट्सप्ततिः ॥ ७६ ॥

॥ इति शुक्लयजुःकाण्वसंहितायां तृतीयोऽध्यायः ॥ ३ ॥

## अथ चतुर्थोऽध्यायः ॥

एदमगन्म देवयजनं पृथिव्या यत्र देवासो अजुषन्त विश्वे ।
ऋक्सामाभ्यां सन्तरन्तो यजुर्भी रायस्पोषेण समिषा मदेम ॥१॥ १
इमा आपः शमु मे सन्तु देवीरोषधे त्रायस्व स्वधिते मैनं हिंसीः ।
आपो अस्मान्मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु ॥२॥ २
विश्वं हि रिप्रं प्रवहन्ति देवीरुदिदाभ्यः शुचिरा पूत एमि ।
दीक्षातपसोस्तनूरसि तां त्वा शिवां शग्मां परिदधे भद्रं वर्णं पुष्यन् ॥३॥ (१) ३

महीनां पयोऽसि वर्चोदा असि वर्चो मे देहि । वृत्रस्य कनीनकासि चक्षुर्दा असि चक्षुर्मे देहि ॥१॥४
चित्पतिर्मा पुनातु वाक्पतिर्मा पुनातु देवो मा सविता पुनात्वच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ।
तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम् ॥२॥ ५
आ वो देवास ईमहे वामं प्रयत्यध्वरे । आ वो देवास आशिषो यज्ञियासो हवामहे ॥३॥ ६
स्वाहा यज्ञं मनसः स्वाहोरोरन्तरिक्षात् । स्वाहा द्यावापृथिवीभ्यां स्वाहा वातादारभे ॥४॥(२) ७

आकूत्यै प्रयुजेऽग्नये स्वाहा मेधायै मनसेऽग्नये स्वाहा
दीक्षायै तपसेऽग्नये स्वाहा सरस्वत्यै पूष्णेऽग्नये स्वाहा ।
आपो देवीर्बृहतीर्विश्वशम्भुवो द्यावापृथिवी उर्वन्तरिक्ष । बृहस्पतये हविषा विधेम स्वाहा ॥१॥ ८
विश्वो देवस्य नेतुर्मर्तो वुरीत सख्यम् । विश्वो राय इषुध्यति द्युम्नं वृणीत पुष्यसे स्वाहा ॥२॥(३) ९

ऋक्सामयोः शिल्पे स्थस्ते वामारभे ते मा पातम् । आस्य यज्ञस्योदृचः ॥१॥ १०
शर्मासि शर्म मे यच्छ नमस्ते अस्तु मा मा हिंसीः ।
ऊर्गस्याङ्गिरस्यूर्णम्रदा ऊर्जं मे यच्छ ॥२॥ ११ [१९७]

सोमस्य नीविरसि विष्णोः शर्मासि शर्म यजमानस्य ।
इन्द्रस्य योनिरसि सुसस्याः कृषीस्कृधि ॥३॥ १२
उच्छ्रयस्व वनस्पत ऊर्ध्वो मा पाह्यꣳहसः । आस्य यज्ञस्योदृचः ॥४॥ (४) १३

व्रतं कृणुत व्रतं कृणुत व्रतं कृणुत । अग्निर्ब्रह्माग्निर्यज्ञो वनस्पतिर्यज्ञियः ॥१॥ १४
दैवीं धियं मनामहे सुमृळीकामभिष्टये । वर्चोदां यज्ञवाहसꣳ सुतीर्था नो असद्वशे ॥२॥ १५
ये देवा मनोजाता मनोयुजो दक्षक्रतवः । ते नोऽवन्तु ते नः पान्तु तेभ्यः स्वाहा ॥३॥ १६
श्वात्राः पीता भवत यूयमापो अस्माकमन्तरुदरे सुशेवाः ।
ता अस्मभ्यमयक्ष्मा अनमीवा अनागसः स्वदन्तु देवीरमृता ऋतावृधः ॥४॥ १७
इयं ते यज्ञिया तनूरपो मुञ्चामि न प्रजाम् ।
अꣳहोमुचः स्वाहाकृताः पृथिवीमाविशत पृथिव्या संभव ॥५॥ १८
अग्ने त्वꣳ सु जागृहि वयꣳ सु मन्दिषीमहि । रक्षा णो अप्रयुच्छन् प्रबुधे नः पुनस्कृधि ॥६॥ १९
पुनर्मनः पुनरायुर्म आगात् पुनश्चक्षुः पुनः श्रोत्रं म आगात् ।
पुनः प्राणः पुनरात्मा म आगात् । वैश्वानरो अदब्धस्तनूपा अग्निर्मा पातु दुरितादवद्यात् ॥७॥ २०
त्वमग्ने व्रतपा असि देव आ मर्त्येष्वा । त्वं यज्ञेष्वीड्यः ॥८॥ २१
रास्वेयत्सोमा भूयो भर । देवो नः सविता वसोर्दाता वस्वदात् ॥९॥ (५) २२

एषा ते शुक्र तनूरेतद्वर्चस्तया सम्भव भ्राजं गच्छ । जूरसि धृता मनसा जुष्टा विष्णवे ॥१॥ २३
तस्यास्ते सत्यसवसः प्रसवे तनूयन्त्रमशीय स्वाहा ।
चन्द्रमसि शुक्रमस्यमृतमसि वैश्वदेवमसि ॥२॥ २४
चिदसि मनासि धीरसि दक्षिणासि क्षत्रियासि यज्ञियास्यदितिरस्युभयतः शीर्ष्णी ।
सा नः सुप्राची सुप्रतीची भव ॥३॥ २५
मित्रस्त्वा पदि बध्नीतां पूषाध्वनस्पात्विन्द्रायाध्यक्षाय ।
अनु त्वा माता मन्यतामनु पितानु भ्राता सगर्भ्योऽनु सखा सयूथ्यः ॥४॥ २६
सा देवि देवमच्छेहीन्द्राय सोमम् । रुद्रस्त्वा वर्तयतु स्वस्ति सोमसखा पुनरेहि ॥५॥ (६) २७

वस्व्यस्यदितिरस्यादित्यासि रुद्रासि चन्द्रासि । बृहस्पतिष्ट्वा सुम्ने रम्णातु रुद्रो वसुभिराचके॥१॥ २८
अदित्यास्त्वा मूर्धन्नाजिघर्मि देवयजने पृथिव्याः । इळायास्पदमसि घृतवत् स्वाहा ॥२॥ २९
अस्मे रमस्वास्मे ते बन्धुः । त्वे रायो अस्मे रायः ॥३॥ ३० [२१६]

मा वयᳬ रायस्पोषेण वियौष्म तोतो रायः । समर्ख्ये देव्या धिया सं दक्षिणयोरुचक्षसा ।
मा म आयुः प्रमोषीर्मो अहं तव वीरान्विदेय तव देवि संदृशि ॥४॥ (७) ३१

एष ते गायत्रो भाग इति मे सोमाय ब्रूतादेष ते त्रैष्टुभो भाग इति मे सोमाय ब्रूतात् ।
एष ते जागतो भाग इति मे सोमाय ब्रूताच्छन्दोमानानाᳬ
साम्राज्यं गच्छतादिति मे सोमाय ब्रूतात् ॥१॥ ३२

आस्माकोऽसि शुक्रस्ते ग्रह्यः । विचितस्त्वा विचिन्वन्तु ॥२॥ ३३

अभि त्यं देवᳬ सवितारमोण्योः कविक्रतुमर्चामि सत्यसवᳬ रत्नधामभि प्रियं मतिं कविम् ।
ऊर्ध्वा यस्यामतिर्भा अदिद्युतत्सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः कृपा स्वः ॥३॥ ३४

प्रजाभ्यस्त्वा प्रजास्त्वानुप्राणन्तु । प्रजास्त्वमनुप्राणिहि ॥४॥ (८) ३५

चन्द्रं त्वा चन्द्रेण क्रीणामि शुक्रᳬ शुक्रेणामृतममृतेन । सग्मे ते गोरस्मे ते चन्द्राणि॥१॥ ३६
तपसस्तनूरसि प्रजापतेर्वर्णः । परमेण पशुना क्रीयसे सहस्रपोषं पुषेयम् ॥२॥ ३७
मित्रो न एहि सुमित्रध इन्द्रस्योरुमाविश दक्षिणम् । उशन्नुशन्तᳬ स्योनः स्योनम् ॥३॥ ३८

स्वान भ्राजाङ्घारे बम्भारे हस्त सुहस्त कृशानो ।
एते वः सोमक्रयणास्तान्रक्षध्वं मा वो दभन् ॥४॥ ३९

परि माग्ने दुश्चरिताद्बाधस्वा मा सुचरिते भज । उदायुषा स्वायुषोदस्थाममृताँ२ अनु ॥५॥ ४०
प्रति पन्थामपद्महि स्वस्तिगामनेहसम् । येन विश्वाः परि द्विषो वृणक्ति विन्दते वसु ॥६॥(९) ४१

अदित्यास्त्वगस्यदित्यै सद आसीद । अस्तभ्नाद्द्यामृषभो अन्तरिक्षममिमीत वरिमाणं पृथिव्याः ।
आसीदद्विश्वा भुवनानि सम्राड्विश्वेत्तानि वरुणस्य व्रतानि ॥१॥ ४२

वनेषु व्यन्तरिक्षं ततान वाजमर्वत्सु पय उस्रियासु ।
हृत्सु क्रतुं वरुणो विक्ष्वग्निं दिवि सूर्यमदधात् सोममद्रौ ॥२॥ ४३

सूर्यस्य चक्षुरारोहाग्नेरक्ष्णः कनीनकाम् । यत्रैतशेभिरीयसे भ्राजमानो विपश्चिता ॥३॥ ४४

उस्रा एतं धूर्षाहौ युज्येथामनश्रू अवीरहणौ ब्रह्मचोदनौ ।
स्वस्ति यजमानस्य गृहान् गच्छतम् ॥ ४ ॥ ४५

भद्रो मेऽसि प्रच्यवस्व भुवस्पते विश्वान्यभि धामानि ।
मा त्वा परिपरिणो विदन् मा त्वा परिपन्थिनो विदन् मा त्वा वृका अघायवो विदन् ।
श्येनो भूत्वा परापत यजमानस्य गृहान गच्छ तन्नौ सᳬस्कृतम् ॥ ५ ॥ ४६ [२३२]

नमो॑ मि॒त्रस्य॒ वरु॑णस्य॒ चक्ष॑से म॒हो दे॒वाय॒ तदृ॒तꣳ स॑पर्यत ।
दू॒रे॒दृशे॑ दे॒वजा॑ताय के॒तवे॑ दि॒वस्पु॒त्राय॒ सूर्या॑य शꣳसत ॥६॥ ४७
वरु॑णस्यो॒त्तम्भ॑नमसि॒ वरु॑णस्य स्कम्भ॒सर्ज॑नी स्थः ।
वरु॑णस्य ऋत॒सद॑न्यसि॒ वरु॑णस्य ऋत॒सद॑नमसि॒ वरु॑णस्य ऋत॒सद॑नी॒मासी॑द ॥७॥ ४८
या ते॒ धामा॑नि ह॒विषा॒ यज॑न्ति॒ ता ते॒ विश्वा॑ परि॒भूर॑स्तु य॒ज्ञम् ।
ग॒य॒स्फान॑ः प्र॒तर॑णः सु॒वीरोऽवी॑रह॒ा प्रच॑रा सोम॒ दुर्या॑न् ॥८॥ (१०) ४९ [२३५]

एदमगन्म तिस्रः ॥ ३ ॥ महीनां चतस्रः ॥ ४ ॥ आकूत्यै द्वे ॥ २ ॥ ऋक्सामयोश्चतस्रः॥ ४ ॥
व्रतं कृणुत नव ॥ ९ ॥ एषा ते पञ्च ॥ ५ ॥ वस्व्यसि चतस्रः ॥ ४ ॥ एष ते चतस्रः
॥ ४ ॥ चन्द्रं त्वा षट् ॥६॥ अदित्यस्त्वगष्ट ॥ ८ ॥ दशानुवाकेष्वेकोनपञ्चाशत् ॥ ४९ ॥
॥ इति शुक्लयजुःकाण्वसंहितायां चतुर्थोऽध्यायः ॥ ४ ॥

## अथ पञ्चमोऽध्यायः ।

अ॒ग्नेस्त॒नूर॑सि॒ विष्ण॑वे त्वा॒ सोम॑स्य त॒नूर॑सि॒ विष्ण॑वे त्वा ।
अति॑थेराति॒थ्यम॑सि॒ विष्ण॑वे त्वा श्ये॒नाय॑ त्वा सोम॒भृते॑
विष्ण॑वे त्वा॒ग्नये॑ त्वा रायस्पोष॒दे विष्ण॑वे त्वा ॥१॥ १
अ॒ग्नेर्ज॒नित्र॑मसि॒ वृष॑णौ स्थः । उ॒र्वश्य॑स्या॒युर॑सि पु॒रूरवा॑ असि ।
गा॒य॒त्रेण॑ त्वा॒ छन्द॑सा मन्थामि॒ त्रैष्टु॑भेन त्वा॒ छन्द॑सा मन्थामि॒
जाग॑तेन त्वा॒ छन्द॑सा मन्थामि ॥२॥ २
भव॑तं नः॒ सम॑नसौ॒ सचे॑तसावरे॒पसौ॑ ।
मा य॒ज्ञꣳ हिꣳसिष्टं॒ मा य॒ज्ञप॑तिं जातवेदसौ शि॒वौ भ॑वतम॒द्य नः॑ ॥३॥ ३
अ॒ग्ना अ॒ग्निश्च॑रति॒ प्रवि॑ष्ट॒ ऋषी॑णां पु॒त्रो अ॑भिशस्ति॒पावा॑ ।
स नः॑ स्यो॒नः सु॒यजा॑ यजे॒ह दे॒वेभ्यो॑ ह॒व्यꣳ सद॒मप्र॑युच्छन्त्स्वाहा॑ ॥४॥ (१) ४

आप॑तये त्वा गृह्णामि॒ परि॑पतये त्वा गृह्णामि । तनू॒नप्त्रे॑ शाक्व॒राय॒ शक्म॒न्नोजि॑ष्ठाय ॥१॥ ५
अना॑धृष्टमस्यनाधृ॒ष्यं दे॒वाना॒मोजः॑ । अन॑भिशस्त्यभिशस्ति॒पा अ॑नभिश॒स्ते॒न्यम् ॥२॥ ६
अञ्ज॑सा स॒त्यमु॑पगेषꣳ सुवि॒ते मा॑ धाः । अग्ने॑ व्रतपा॒स्त्वे व्र॑तपाः ॥३॥ ७
या तव॑ त॒नूरि॒यꣳ सा मयि॒ या मम॑ त॒नूरे॒षा सा त्वयि॑ ।
स॒ह नौ॑ व्रतपते व्र॒तान्यनु॑ मे दी॒क्षां दी॒क्षाप॑ति॒र्मन्य॑ता॒मनु॒ तप॒स्तप॑स्पतिः ॥४॥ ८ [२४३]

अꣳशुरꣳशुष्टे देव सोमाप्यायतामिन्द्रायैकधनविदे ।
आ तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्व ॥५॥ ९
आप्याययास्मान् सखीन्त्सन्या मेधया । स्वस्ति ते देव सोम सुत्यामुदृचमशीय ॥६॥ १०
एष्टा रायः प्रेषे भगाय । ऋतमृतवादिभ्यो नमो दिवे नमः पृथिव्यै ॥७॥ ११
या ते अग्नेऽयःशया तनूर्वर्षिष्ठा गह्वरेष्ठा । उग्रं वचो अपावधीत्त्वेषं वचो अपावधीत् स्वाहा ।
या ते अग्ने रजःशया तनूर्वर्षिष्ठा गह्वरेष्ठा । उग्रं वचो अपावधीत्त्वेषं वचो अपावधीत् स्वाहा ।
या ते अग्ने हरिशया तनूर्वर्षिष्ठा गह्वरेष्ठा ।
उग्रं वचो अपावधीत्त्वेषं वचो अपावधीत् स्वाहा ॥८॥ (२) १२

तप्तायनी मेऽसि वित्तायनी मेऽसि । अवतान्मा व्यथितमवतान्मा नाथितम् ॥१॥ १३
विदेदग्निर्नभो नामाग्ने अङ्गिर आयुना नाम्नेहि ।
योऽस्यां पृथिव्यामसि यत्तेनाधृष्टं नाम यज्ञियं तेन त्वा दधे ।
विदेदग्निर्नभो नामाग्ने अङ्गिर आयुना नाम्नेहि ।
यो द्वितीयस्यां पृथिव्यामसि यत्तेनाधृष्टं नाम यज्ञियं तेन त्वा दधे ।
विदेदग्निर्नभो नामाग्ने अङ्गिर आयुना नाम्नेहि ।
यस्तृतीयस्यां पृथिव्यामसि यत्तेनाधृष्टं नाम यज्ञियं तेन त्वा दधे ।
अनु त्वा देववीतये सिꣳह्यसि सपत्नसाही देवेभ्यः कल्पस्व सिꣳह्यसि
सपत्नसाही देवेभ्यः शुन्धस्व सिꣳह्यसि सपत्नसाही देवेभ्यः शुम्भस्व ॥२॥ (३) १४

इन्द्रघोषस्त्वा वसुभिः पुरस्तात्पातु प्रचेतास्त्वा रुद्रैः पश्चात्पातु ।
मनोजवास्त्वा पितृभिर्दक्षिणतः पातु विश्वकर्मा त्वादित्यैरुत्तरतः पातु ॥१॥ १५
इदमहं तप्तं वार्बहिर्धा यज्ञान्निः सृजामि ।
सिꣳह्यसि स्वाहा सिꣳह्यस्यादित्यवनिः स्वाहा ॥२॥ १६
सिꣳह्यसि ब्रह्मवनिः क्षत्रवनिः स्वाहा सिꣳह्यसि सुप्रजावनी रायस्पोषवनिः स्वाहा ।
सिꣳह्यस्यावह देवान्यजमानाय स्वाहा भूतेभ्यस्त्वा ॥३॥ १७
ध्रुवोऽसि पृथिवीं दृꣳह ध्रुवक्षिदस्यन्तरिक्षं दृꣳह ।
अच्युतक्षिदसि दिवं दृꣳहाग्नेर्भस्मास्यग्नेः पुरीषमसि ॥४॥ (४) १८

युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः ।
वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः ॥१॥ १९ [३५४]

इदं विष्णुर्विचक्रमे त्रेधा नि दधे पदम् । समूढमस्य पाᳪसुरे स्वाहा ॥२॥ २०
इरावती धेनुमती हि भूतᳪ सूयवसिनी मनवे दशस्या ।
व्यस्कभ्ना रोदसी विष्ण एते दाधर्थ पृथिवीमभितो मयूखैः स्वाहा ॥३॥ २१
देवश्रुतौ देवेष्वाघोषतम् । प्राची प्रेतमध्वरं कल्पयन्ती ऊर्ध्वं यज्ञं नयतं मा जिह्वरतम् ॥४॥ २२
स्वं गोष्ठमावदतं देवी दुर्ये आयुर्मा निर्वादिष्टं प्रजां मा निर्वादिष्टम् ।
अत्र रमेथां वर्ष्मन् पृथिव्याः ॥५॥ २३
विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजाᳪसि ।
यो अस्कभायदुत्तरᳪ सधस्थं विचक्रमाणस्त्रेधोरुगायो विष्णवे त्वा ॥६॥ २४
दिवो वा विष्ण उत वा पृथिव्या महो वा विष्ण उरोरन्तरिक्षात् ।
उभा हि हस्ता वसुना पृणस्वा प्रयच्छ दक्षिणादोत सव्याद्विष्णवे त्वा ॥७॥ २५
प्र तद्विष्णु स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः ।
यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥८॥ २६
विष्णो रराटमसि विष्णोः श्नप्त्रे स्थो विष्णोः स्यूरसि विष्णोर्ध्रुवोऽसि ।
वैष्णवमसि विष्णवे त्वा ॥९॥ (५) २७

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ।
आददे नार्यसीदमहᳪ रक्षसो ग्रीवा अपिकृन्तामि ।
बृहन्नसि बृहद्रवा बृहतीमिन्द्राय वाचं वद । रक्षोहणं वलगहनं वैष्णवीम् ॥१॥ २८
इदमहं तं वलगमुद्वपामि यन्नो निष्ट्यो यममात्यो निचखान ।
इदमहं तं वलगमुद्वपामि यं नः समानो यमसमानो निचखान ।
इदमहं तं वलगमुद्वपामि यं नः सबन्धुर्यमसबन्धुर्निचखान ।
इदमहं तं वलगमुद्वपामि यं नः सजातो यमसजातो निचखानोत्कृत्यां किरामि ॥२॥ २९
स्वराळसि सपत्नहा सत्रराळस्यभिमातिहा । जनराळसि रक्षोहा सर्वराळस्यमित्रहा ॥३॥ ३०
रक्षोहणो वलगहनः प्रोक्षामि वैष्णवान्रक्षोहणो वलगहनोऽवनयामि वैष्णवान् ।
रक्षोहणो वलगहनोऽवस्तृणामि वैष्णवान् ॥४॥ ३१
रक्षोहणौ वलगहना उपदधामि वैष्णवी रक्षोहणौ वलगहनौ पर्यूहामि वैष्णवी ।
वैष्णवमसि वैष्णवा स्थ ॥५॥ (६) ३२ [२६७]

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ।
आददे नार्यसीदमहꣳ रक्षसो ग्रीवा अपिकृन्तामि । यवोऽसि यवयास्मद् द्वेषो यवयारातीः ।
दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वा ॥१॥ ३३
शुन्धन्ताँल्लोकाः पितृषदनाः पितृषदनमसि ।
उद्दिवꣳ स्तभानान्तरिक्षं पृण दृꣳहस्व पृथिव्याम् ॥२॥ ३४
द्युतानस्त्वा मारुतो मिनोतु मित्रावरुणौ ध्रुवेण धर्मणा ।
ब्रह्मवनि त्वा क्षत्रवनि रायस्पोषवनि पर्यूहामि ॥३॥ ३५
ब्रह्म दृꣳह क्षत्रं दृꣳहायुर्दृꣳह प्रजां दृꣳह । ध्रुवासि ध्रुवोऽस्मिन्यजमान आयतने भूयात् ।
घृतेन द्यावापृथिवी पूर्येथामिन्द्रस्य छदिरसि विश्वजनस्य छाया ॥४॥ ३६
परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतः । वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टयः ॥५॥ ३७
इन्द्रस्य स्यूरसीन्द्रस्य ध्रुवोऽसि । ऐन्द्रमसि वैश्वदेवमसि ॥६॥ (७) ३८

विभूरसि प्रवाहणो वह्निरसि हव्यवाहनः । श्वात्रोऽसि प्रचेतास्तुथोऽसि विश्ववेदाः ॥१॥ ३९
उशिगसि कविरङ्घारिरसि बम्भारिः । अवस्यूरसि दुवस्वाञ्छुन्ध्यूरसि मार्जालीयः ॥२॥ ४०
ऋतधामासि स्वर्ज्योतिः समुद्रोऽसि विश्वव्यचाः । अजोऽस्येकपादहिरसि बुध्न्यः ॥३॥ ४१
सम्राडसि कृशानुः परिषद्योऽसि पवमानः । नभोऽसि प्रतक्वा मृष्टोऽसि हव्यसूदनः ॥४॥ ४२
समूह्योऽसि विश्ववेदा ऊनातिरिक्तस्य प्रतिष्ठा ।
अग्नयः सगरा सगरा स्थ सगरेण नाम्ना रौद्रेणानीकेन ।
पातमाग्नयः पिपृतमाग्नयो नमो वोऽस्तु मा मा हिꣳसिष्ट ॥५॥ (८) ४३

ज्योतिरसि विश्वरूपं विश्वेषां देवानाꣳ समित् । त्वꣳ सोम तनूकृद्भ्यो द्वेषोभ्योऽन्यकृतेभ्यः ।
उरु यन्तासि वरूथꣳ स्वाहा । जुषाणो अप्तुराज्यस्य वेतु स्वाहा ॥१॥ ४४
अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ॥२॥ ४५
अयं नो अग्निर्वरिवस्कृणोत्वयं मृधः पुर एतु प्रभिन्दन् ।
अयं वाजाञ्जयतु वाजसाता अयꣳ शत्रूञ्जयतु जर्हृषाणः स्वाहा ॥३॥ ४६
उरु विष्णो वि क्रमस्वोरु क्षयाय नस्कृधि । घृतं घृतयोने पिब प्रप्र यज्ञपतिं तिर स्वाहा ॥४॥ ४७
देव सवितरेष ते सोमस्तꣳ रक्षस्व मा त्वा दभन् ।
एतत्त्वं देव सोम देवो देवाँ उपागाः ॥५॥ ४८ [१८३]

इदमहं मनुष्यान्त्सह रायस्पोषेण स्वाहा निर्वरुणस्य पाशान्मुच्ये। अग्ने व्रतपास्त्वे व्रतपाः॥६॥ ४९
या तव तनूर्मय्यभूदेषा सा त्वयि या मम तनूस्त्वय्यभूदियꣳ सा मयि।
यथायथं नौ व्रतपते व्रतान्यनु मे दीक्षां दीक्षापतिरमꣳस्तानु तपस्तपस्पतिः ॥७॥ (९) ५०

उरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि। घृतं घृतयोने पिब प्रप्र यज्ञपतिं तिर स्वाहा ॥१॥ ५१
अत्यन्याँ३ अगां नान्याँ३ उपागाम्। अर्वाक्त्वा परेभ्यः परोऽवरेभ्यः ॥२॥ ५२
तं त्वा जुषामहे देव वनस्पते देवयज्यायै। देवास्त्वा देवयज्यायै जुषन्तां विष्णवे त्वा ॥३॥ ५३
ओषधे त्रायस्व स्वधिते मैनꣳ हिꣳसीः।
दिवं मा लेखीरन्तरिक्षं मा हिꣳसीः पृथिव्या संभव ॥४॥ ५४
अयꣳ हि त्वा स्वधितिस्तेतिजानः प्रणिनाय महते सौभगाय।
अतस्त्वं देव वनस्पते शतवल्शो विरोह सहस्रवल्शा वि वयꣳ रुहेम ॥५॥(१०)५५[२९०]

अग्नेस्तनूरसि चतस्रः ॥ ४ ॥ आ पतयेऽष्ट ॥ ८ ॥ तसायनी द्वे ॥ २ ॥ इन्द्रघोषश्चतस्रः ॥ ४ ॥
युञ्जते नव ॥ ९ ॥ देवस्य त्वा पञ्च ॥ ५ ॥ द्वितीयदेवस्य त्वा षट् ॥ ६ ॥ विभूरसि
पञ्च ॥ ५ ॥ ज्योतिरसि सप्त ॥ ७ ॥ उरु विष्णो पञ्च ॥ ५ ॥ दशानुवाकेषु
पञ्चपञ्चाशत् ॥ ५५ ॥ अग्नेस्तनूरसि। पञ्चपञ्चाशत् ॥
॥ इति शुक्लयजुःकाण्वसंहितायां पञ्चमोऽध्यायः ॥ ५ ॥

## अथ षष्ठोऽध्यायः ॥

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्।
आददे नार्यसीदमहꣳ रक्षसो ग्रीवा अपिकृन्तामि।
यवोऽसि यवयास्मद्द्वेषो यवयारातीः।
दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वा।
शुन्धन्ताँल्लोकाः पितृषदनाः पितृषदनमसि ॥१॥ १
अग्रेणीरसि स्वावेश उन्नेतॄणामेतस्य वित्तादधि त्वा स्थास्यति।
देवस्त्वा सविता मध्वानक्तु सुपिप्पलाभ्यस्त्वौषधीभ्यः।
दिवमग्रेणास्पृक्ष आन्तरिक्षं मध्येनाप्राः पृथिवीमुपरेणादृꣳहीः ॥२॥ २
या ते धामान्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः।
अत्राह तदुरुगायस्य विष्णोः परमं पदमवभारि भूरि ॥३॥ ३[२९३]

ब्रह्मवनिं त्वा क्षत्रवनिं रायस्पोषवनिं पर्यूहामि ।
ब्रह्म दृꣳह क्षत्रं दृꣳहायुर्दृꣳह प्रजां दृꣳह ॥४॥ ४
विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखा ॥५॥ ५
तद्विष्णोः परमं पदꣳ सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥६॥ ६
परि वीरसि परि त्वा दैवीर्विशो व्ययन्ताम् । परीमं यजमानꣳ रायो मनुष्याणाम् ।
दिवः सूनुरस्येष ते पृथिव्याँल्लोक आरण्यस्ते पशुः ॥७॥ (१) ७

उपावीरस्युप देवान् दैवीर्विशः प्रागुरुशिजो वह्नितमान् ।
देव त्वष्टर्वसु रम हव्या ते स्वदन्ताम् ॥१॥ ८
रेवती रमध्वं बृहस्पते धारया वसूनि ।
ऋतस्य त्वा देवहविः पाशेन प्रतिमुञ्चामि धर्षा मानुषः ॥२॥ ९
देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ।
अग्नीषोमाभ्यां जुष्टं नियुनज्मि ।
अद्भ्यस्त्वौषधीभ्यः प्रोक्षाम्यनु त्वा माता मन्यतामनु पितानु भ्राता सगर्भ्योऽनु सखा सयूथ्यः ।
अग्नीषोमाभ्यां त्वा जुष्टं प्रोक्षामि ॥३॥ १०
अपां पेरुरस्यापो देवीः स्वदन्तु । स्वात्तं चित्सद्देवहविः ॥४॥ ११
सं ते प्राणो वातेन गच्छताꣳ समङ्गानि यजत्रैः । सं यजमान आशिषा ॥५॥ १२
घृतेनाक्तौ पशूँस्त्रायेथाꣳ रेवति यजमाने । प्रियं धा आविश ॥६॥ १३
उरोरन्तरिक्षात्सजूर्देवेन वातेन । अस्य हविषस्त्मना यज समस्य तन्वा भव ॥७॥ १४
वर्षो वर्षीयसि यज्ञे यज्ञपतिं धाः । स्वाहा देवेभ्यो देवेभ्यः स्वाहा ।
माहिर्भूर्मा पृदाकुः ॥८॥ (२) १५

नमस्त आतानानर्वा प्रेहि । घृतस्य कुल्या उप ऋतस्य पथ्या उप ॥१॥ १६
देवीरापः शुद्धा वोढ्वꣳ सुपरिविष्टा देवेषु । सुपरिविष्टा वयं परिवेष्टारो भूयास्म ॥२॥ १७
वाचं ते शुन्धामि प्राणं ते शुन्धामि चक्षुस्ते शुन्धामि श्रोत्रं ते शुन्धामि ।
नाभिं ते शुन्धामि मेढ्रं ते शुन्धामि पायुं ते शुन्धामि चरित्रांस्ते शुन्धामि ॥३॥ १८
मनस्त आप्यायतां वाक्त आप्यायतां प्राणस्त आप्यायतां
चक्षुस्त आप्यायताꣳ श्रोत्रं त आप्यायताम् ।
यत्ते क्रूरं यदास्थितं तत्त आप्यायतां तत्त निष्ट्यायतां तत्ते शुध्यतु शमहोभ्यः ॥४॥ १९ [३०१]

ओषधे त्रायस्व स्वधिते मैनꣳ हिꣳसीः । रक्षसां भागोऽसि निरस्तꣳ रक्षः ॥५॥ २०
इदमहꣳ रक्षोऽभितिष्ठामीदमहꣳ रक्षोऽववाधे । इदमहꣳ रक्षोऽधमं तमो नयामि ॥६॥ २१
घृतेन द्यावापृथिवी प्रोर्णुवाथां वायो वे स्तोकानाम् ।
जुषाणो अग्निराज्यस्य वेतु स्वाहा । स्वाहाकृते ऊर्ध्वनभसं मारुतं गच्छतम् ॥७॥ (३) २२

सं ते मनो मनसा सं प्राणः प्राणेन गच्छताम् । रेळस्यग्निष्ट्वा श्रीणात्वापस्त्वा समरिणन् ॥१॥ २३
वातस्य त्वा ध्राज्यै पूष्णो रꣳह्या ऊष्मणो व्यथिषत् । प्रयुतं द्वेषः ॥२॥ २४
घृतं घृतपावानः पिबत वसां वसापावानः पिबत । अन्तरिक्षस्य हविरसि स्वाहा ॥३॥ २५
दिशः प्रदिश आदिशो विदिश उद्दिशो दिग्भ्यः स्वाहा ।
ऐन्द्रः प्राणो अङ्गेअङ्गे निधीत ऐन्द्र उदानो अङ्गेअङ्गे निदीधे ॥४॥ २६
देव त्वष्टर्भूरि ते सꣳ समेतु स लक्ष्मा यद्विषुरूपं भवाति ।
देवत्रा यन्तमवसे सखायोऽनु त्वा माता पितरो मदन्तु ॥५॥ (४) २७

समुद्रं गच्छ स्वाहा देवꣳ सवितारं गच्छ स्वाहा ।
अन्तरिक्षं गच्छ स्वाहा मित्रावरुणौ गच्छ स्वाहा ।
अहोरात्रे गच्छ स्वाहा छन्दाꣳसि गच्छ स्वाहा ।
द्यावापृथिवी गच्छ स्वाहा सोमं गच्छ स्वाहा ।
यज्ञं गच्छ स्वाहा नभो दिव्यं गच्छ स्वाहा ।
अग्निं वैश्वानरं गच्छ स्वाहा मनो मे हार्दिं यच्छ ॥१॥ २८
दिवं ते धूमो गच्छत्वन्तरिक्षं ज्योतिः । पृथिवीं भस्मनापृण स्वाहा ॥२॥ २९
मापो मौषधीर्हिꣳसीर्धाम्नोधाम्नो राजꣳस्ततो वरुण नो मुञ्च ।
यदाहुरघ्न्या इति वरुणेति शपामहे ततो वरुण नो मुञ्च ॥३॥ ३०
सुमित्रिया न आप ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु ।
योऽस्मान् द्वेष्टि यं च वयं द्विष्मः ॥४॥ ३१
इदमापः प्रवहत यत्किं च दुरितं मयि ।
यद्वाहमभिदुद्रोह यद्वा शेप उतानृतम् ॥५॥ (५) ३२

हविष्मतीरिमा आपो हविष्माँ३ आविवासति ।
हविष्मान् देवो अध्वरो हविष्माँ३ अस्तु सूर्यः ॥१॥ ३३ [३०३]

अग्नेर्वोऽपन्नगृहस्य सदसि सादयामि । इन्द्राग्न्योर्भागधेयी स्थ मित्रावरुणयोर्भागधेयी स्थ ।
विश्वेषां देवानां भागधेयी स्थ ॥२॥ ३४
अमूर्या उप सूर्ये याभिर्वा सूर्यः सह । ता नो हिन्वन्त्वध्वरम् ॥३॥ (६) ३५

हृदे त्वा मनसे त्वा दिवे त्वा सूर्याय त्वा । ऊर्ध्वो अध्वरं दिवि देवेषु होत्रा यच्छ ॥१॥ ३६
सोम राजन्विश्वास्त्वं प्रजा उपावरोह । विश्वास्त्वां प्रजा उपावरोहन्तु ॥२॥ ३७
शृणोत्वग्निः समिधा हवं मे शृण्वन्त्वापो धिषणाश्च देवीः ।
श्रोता ग्रावाणो विदुषो न यज्ञꣳ शृणोतु देवः सविता हवं मे स्वाहा ॥३॥ ३८
देवीरापो अपां नपाद्यो व ऊर्मिर्हविष्यः । इन्द्रियावान् मदिन्तमः ॥४॥ ३९
तं देवेभ्यो देवत्रा दात शुक्रपेभ्यः । येषां भाग स्थ स्वाहा ॥५॥ ४०
कार्षिरसि समुद्रस्य त्वा क्षित्या उन्नयामि । समापो अद्भिरग्मत समोषधीभिरोषधीः ॥६॥ ४१
यमग्ने पृत्सु मर्त्यमवा वाजेषु यं जुनाः । स यन्ता शश्वतीरिषः स्वाहा ॥७॥ (७) ४२

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ।
आददे रावासि गभीरमिममध्वरं कृधीन्द्राय सुषूतमम् ।
उत्तमेन पविनोर्जस्वन्तं मधुमन्तं पयस्वन्तम् ।
निग्राभ्या स्थ देवश्रुतस्तर्पयत मा ॥१॥ ४३
मनो मे तर्पयत वाचं मे तर्पयत प्राणं मे तर्पयत चक्षुर्मे तर्पयत श्रोत्रं मे तर्पयत ।
आत्मानं मे तर्पयत प्रजां मे तर्पयत पशून् मे तर्पयत गणान्मे तर्पयत गणा मे मा वितृषन्॥२॥४४
इन्द्राय त्वा वसुमते रुद्रवत इन्द्राय त्वादित्यवते ।
इन्द्राय त्वाभिमातिघ्ने श्येनाय त्वा सोमभृतेऽग्नये त्वा रायस्पोषदे ॥३॥ ४५
यत्ते सोम दिवि ज्योतिर्यत्पृथिव्यां यदुरा अन्तरिक्षे ।
तेनास्मै यजमानायोरु राये कृध्यधि दात्रे वोचः ॥४॥ ४६
श्वात्रा स्थ वृत्रतुरो राधोगूर्ता अमृतस्य पत्नीः ।
ता देवीर्देवत्रेमं यज्ञं नयतोपहूताः सोमस्य पिबत ॥५॥ ४७
मा भेर्मा संविक्था ऊर्जं धत्स्व धिषणे वीड्वी सती वीडयेथामूर्जं दधाथाम् ।
पाप्मा हतो न सोमः ॥६॥ ४८
प्रागपागुदगधराक्सर्वतस्त्वा दिश आधावन्तु । अम्ब निष्पर समरीर्विदाम् ॥७॥ ४९ [३३९]

त्वमङ्ग प्रशꣳसिषो देवः शविष्ठ मर्त्यम् ।
न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वचः ॥८॥ (८) ५० [३४०]

देवस्य त्वा सप्त ॥ ७ ॥ उपावीरस्यष्ट ॥ ८ ॥ नमस्ते सप्त ॥ ७ ॥ सन्ते पञ्च ॥ ५ ॥ समुद्रं पञ्च ॥ ५ ॥ हविष्मतास्तिस्रः ॥ ३ ॥ हृदे त्वा सप्त ॥ ७ ॥ देवस्य त्वाष्ट ॥८॥
अष्टानुवाकेषु पञ्चाशत् ॥ ५० ॥ इषे देवस्य समाः पञ्चाशत् ॥
॥ इति शुक्लयजुःकाण्वसंहितायां षष्ठोऽध्यायः ॥ ६ ॥

## अथ सप्तमोऽध्यायः ॥

वाचस्पतये पवस्व वृष्णो अꣳशुभ्यां गभस्तिपूतः ।
देवो देवेभ्यः पवस्व येषां भागोऽसि मधुमतीर्न इषस्कृधि ॥१॥ १
यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहा ।
स्वाहोर्वन्तरिक्षमन्वेमि स्वाङ्कृतोऽसि विश्वेभ्य इन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यः ॥२॥ २
मनस्त्वाष्टु स्वाहा त्वा स्वभवः सूर्याय । देवेभ्यस्त्वा मरीचिपेभ्यो देवाꣳशो यस्मै त्वेळे ॥
तत्सत्यमुपरिप्रुता भङ्गेन हतोऽसौ फट् प्राणाय त्वा व्यानाय त्वा ॥३॥ ( १ ) ३

उपयामगृहीतोऽस्यन्तर्यच्छ मघवन् पाहि सोमम् । उरुष्य रायोवेषो यजस्व ॥१॥ ४
अन्तस्ते द्यावापृथिवी दधाम्यन्तर्दधाम्युर्वन्तरिक्षम् ।
सजूर्देवेभिरवरैः परैश्चान्तर्यामे मघवन् मादयस्व ।
स्वाङ्कृतोर्वन्तरिक्षमन्वेमि स्वाङ्कृतोऽसि विश्वेभ्य इन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यः ।
मनस्त्वाष्टु स्वाहा त्वा स्वभवः सूर्याय । देवेभ्यस्त्वा मरीचिपेभ्य उदानाय त्वा ॥२॥(२)५

आ वायो भूष शुचिपा उप नः सहस्रं ते नियुतो विश्ववार ।
उपो ते अन्धो मद्यमयामि यस्य देव दधिषे पूर्वपेयं वायवे त्वा ॥१॥ ६
इन्द्रवायू इमे सुता उप प्रयोभिरागतम् । इन्दवो वामुशन्ति हि ।
उपयामगृहीतोऽसि वायव इन्द्रवायुभ्यां त्वैष ते योनिः सजोषोभ्यां त्वा ॥२॥ (३) ७

अयं वां मित्रावरुणा सुतः सोम ऋतावृधा । ममेदिह श्रुतꣳ हवम् ।
उपयामगृहीतोऽसि मित्रावरुणाभ्यां त्वा ॥१॥ ८
राया वयꣳ ससवाꣳसो मदेम हव्येन देवा यवसेन गावः ।
तां धेनुं मित्रावरुणा युवं नो विश्वाहा धत्तमनपस्फुरन्तीम् । एष ते योनिरृतायुभ्यां त्वा ॥२॥(४)९
[३४९]

या वां कशा मधुमत्याश्विना सूनृतावती । तया यज्ञं मिमिक्षतम् ।
उपयामगृहीतोऽस्यश्विभ्यां त्वैष ते योनिर्माध्वीभ्यां त्वा ॥१॥ (५) १०

तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषदꣳ स्वर्विदम् ।
प्रतीचीनं वृजनं दोहसे धुनिमाशुं जयन्तमनु यासु वर्धसे । उपयामगृहीतोऽसि शण्डाय त्वा ॥१॥ ११
एष ते योनिर्वीरतां पाह्यपमृष्टः शण्डो देवास्त्वा शुक्रपाः प्रणयन्त्वनाधृष्टासि ।
सुवीरो वीरान् प्रजनयन् परीह्यभि रायस्पोषेण यजमानम् ।
संजग्मानो दिवा पृथिव्या शुक्रः शुक्रशोचिषा निरस्तः शण्डः शुक्रस्याधिष्ठानमसि ॥२॥ १२
अच्छिन्नस्य ते देव सोम सुवीर्यस्य रायस्पोषस्य ददितारः स्याम ।
सा प्रथमा सꣳस्कृतिर्विश्ववारा स प्रथमो वरुणो मित्रो अग्निः ॥३॥ १३
स प्रथमो बृहस्पतिश्चिकित्वाꣳस्तस्मा इन्द्राय सुतमा जुहोत स्वाहा ।
तृम्पन्तु होत्रा मधोर्यत्स्विष्टँ यत्सुभृतं यत्स्वाहा ॥४॥ (६) १४

अयं वेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने ।
इममपाꣳ संगमे सूर्यस्य शिशुं न विप्रा मतिभी रिहन्ति ।
उपयामगृहीतोऽसि मर्काय त्वा ॥१॥ १५
मनो न येषु हवनेषु तिग्मं विपः शच्या वनुथो द्रवन्ता ।
आ यः शर्याभिस्तुविनृम्णो अस्या श्रीणीतादिशं गभस्तौ ॥२॥ १६
एष ते योनिः प्रजाः पाह्यपमृष्टो मर्को देवास्त्वा मन्थिपाः प्रणयन्त्वनाधृष्टासि ।
सुप्रजाः प्रजाः प्रजनयन् परीह्यभि रायस्पोषेण यजमानम् ।
संजग्मानो दिवा पृथिव्या मन्थी मन्थिशोचिषा निरस्तो मर्को मन्थिनोऽधिष्ठानमसि ॥३॥ १७
अच्छिन्नस्य ते देव सोम सुवीर्यस्य रायस्पोषस्य ददितारः स्याम ।
सा प्रथमा सꣳस्कृतिर्विश्ववारा स प्रथमो वरुणो मित्रो अग्निः ॥४॥ १८
स प्रथमो बृहस्पतिश्चिकित्वाꣳस्तस्मा इन्द्राय सुतमा जुहोत स्वाहा ।
तृम्पन्तु होत्रा मधोर्यत्स्विष्टं यत्सुभृतं यत्स्वाहा ॥५॥ ( ७ ) १९

ये देवासो दिव्येकादश स्थ पृथिव्यामध्येकादश स्थ ।
अप्सुक्षितो महिनैकादश स्थ ते देवासो यज्ञमिमं जुषध्वम् ॥१॥ २०
उपयामगृहीतोऽस्याग्रयणोऽसि स्वाग्रयणः । पाहि यज्ञं पाहि यज्ञपतिम् ॥२॥ २१[३६१]

विष्णुस्त्वामिन्द्रियेण पातु विष्णुं त्वं पाह्यभि सवनानि पाहि ।
सोमः पवते सोमः पवते सोमः पवते ॥३॥ २२
अस्मै ब्रह्मणे पवतेऽस्मै क्षत्राय पवतेऽस्मै सुन्वते यजमानाय पवते ।
इष ऊर्जे पवतेऽद्भ्य ओषधीभ्यः पवते द्यावापृथिवीभ्यां पवते सुभूताय पवते ब्रह्मवर्चसाय पवते।
विश्वेभ्यस्त्वा देवेभ्य एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥४॥ (८) २३
उपयामगृहीतोऽसीन्द्राय त्वा बृहद्वते वयस्वत उक्थायुवं गृह्णामि ।
यत्त इन्द्र बृहद्वयस्तस्मै त्वा विष्णवे त्वैषते योनिरुक्थेभ्यस्त्वा ॥१॥ २४
देवेभ्यस्त्वा देवायुवं गृह्णामि यज्ञस्यायुषे मित्रावरुणाभ्यां त्वा देवायुवं गृह्णामि यज्ञस्यायुषे ।
इन्द्राय त्वा देवायुवं गृह्णामि यज्ञस्यायुष इन्द्राग्निभ्यां त्वा देवायुवं गृह्णामि यज्ञस्यायुषे ।
इन्द्राय त्वा देवायुवं गृह्णामि यज्ञस्यायुष इन्द्रावरुणाभ्यां त्वा देवायुवं गृह्णामि यज्ञस्यायुषे ।
इन्द्राबृहस्पतिभ्यां त्वा देवायुवं गृह्णामि यज्ञस्यायुष इन्द्राविष्णुभ्यां
त्वा देवायुवं गृह्णामि यज्ञस्यायुषे ॥२॥ (९) २५
मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम् ।
कविꣳ सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः ॥१॥ २६
उपयामगृहीतोऽसि ध्रुवोऽसि ध्रुवक्षितिर्ध्रुवाणां ध्रुवतमोऽच्युतानामच्युतक्षित्तमः ।
एष ते योनिर्वैश्वानराय त्वा ॥२॥ २७
ध्रुवं ध्रुवेण मनसा वाचा सोममवनयामि । अथा न इन्द्र इद्विशोऽसपत्नाः समनसस्करत् ॥३॥
(१०) २८
यस्ते द्रप्स स्कन्दति यस्ते अꣳशुर्ग्रावच्युतो धिषणयोरुपस्थात् ।
अध्वर्योर्वा परि वा यः पवित्रात्तं ते जुहोमि मनसा
वषट्कृतꣳ स्वाहा देवानामुत्क्रमणमसि ॥१॥ (११) २९
उपयामगृहीतोऽसि मधवे त्वोपयामगृहीतोऽसि माधवाय त्वा ।
उपयामगृहीतोऽसि शुक्राय त्वोपयामगृहीतोऽसि शुचये त्वा ।
उपयामगृहीतोऽसि नभसे त्वोपयामगृहीतोऽसि नभस्याय त्वा ।
उपयामगृहीतोऽसीषे त्वोपयामगृहीतोऽस्यूर्जे त्वा ।
उपयामगृहीतोऽसि सहसे त्वोपयामगृहीतोऽसि सहस्याय त्वा ।
उपयामगृहीतोऽसि तपसे त्वोपयामगृहीतोऽसि तपस्याय त्वा ।
उपयामगृहीतोऽस्यꣳहसस्पतये त्वा ॥१॥ (१२) ३० [२७०]

इन्द्राग्नी आगतꣳ सुतं गीर्भिर्नभो वरेण्यम् । अस्य पातं धियेषिता ।
उपयामगृहीतोऽसीन्द्राग्निभ्यां त्वैष ते योनिरिन्द्राग्निभ्यां त्वा ॥१॥ (१३) ३१
आ घा ये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक् । येषामिन्द्रो युवा सखा ।
उपयामगृहीतोऽस्यग्नीन्द्राभ्यां त्वैष ते योनिरग्नीन्द्राभ्यां त्वा ॥१॥ (१४) ३२
ओमासश्चर्षणीधृतो विश्वे देवास आ गत । दाश्वाꣳसो दाशुषः सुतम् ।
उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्य एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः॥१॥(१५) ३३
विश्वे देवास आगत शृणुता म इमꣳ हवम् । एदं बर्हिर्निषीदत ।
उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्य एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥१॥(१६) ३४
इन्द्र मरुत्व इह पाहि सोमं यथा शार्याते अपिबः सुतस्य ।
तव प्रणीती तव शूर शर्मन्नाविवासन्ति कवयः सुयज्ञाः ।
उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते ॥१॥ (१७) ३५
मरुत्वन्तं वृषभं वावृधानमकवारिं दिव्यꣳ शासमिन्द्रम् ।
विश्वासाहमवसे नूतनायोग्रꣳ सहोदामिह तꣳ हुवेम ।
उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते ॥१॥ (१८) ३६
उपयामगृहीतोऽसि मरुतामोजसे त्वा ॥१॥ (१९) ३७
सजोषा इन्द्र सगणो मरुद्भिः सोमं पिब वृत्रहा शूर विद्वान् ।
जहि शत्रूꣳरप मृधो नुदस्वाथाभयं कृणुहि विश्वतो नः ।
उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते ॥१॥ (२०) ३८
महाँ३ इन्द्रो नृवदा चर्षणिप्रा उत द्विबर्हा अमिनः सहोभिः ।
अस्मद्र्यग्वावृधे वीर्यायोरुः पृथुः सुकृतः कर्तृभिर्भूत् ।
उपयामगृहीतोऽसि महेन्द्राय त्वैष ते योनिर्महेन्द्राय त्वा ॥१॥ (२१) ३९
महाँ३ इन्द्रो य ओजसा पर्जन्यो वृष्टिमाँ३ इव स्तोमैर्वत्सस्य वावृधे ।
उपयामगृहीतोऽसि महेन्द्राय त्वैष ते योनिर्महेन्द्राय त्वा ॥१॥ (२२) ४० [३८०]

वाचस्पतये तिस्रः ॥३॥ उपयामगृहीतोऽसि द्वे ॥२॥ आ वायो द्वे ॥२॥ अयं वां द्वे ॥ २ ॥ या वामेका ॥ १ ॥
तं प्रत्नथा चतस्रः ॥ ४ ॥ अयं वेनः पञ्च ॥ ५ ॥ ये देवासश्चतस्रः ॥ ४ ॥ इन्द्राय त्वा द्वे ॥ २ ॥ मूर्धानं
तिस्रः ॥ ३ ॥ यस्त एका ॥१॥ मघव एका ॥ १ ॥ इन्द्राग्नी आगतमेका ॥ १ ॥ आ घा य एका ॥१॥
ओमासश्चर्षणीधृत एका ॥ १ ॥ विश्वे देवास एका ॥ १ ॥ इन्द्र मरुत्व एका ॥ १ ॥ मरुत्वन्तं
वृषभमेका ॥१॥ मरुतामोजस एका ॥१॥ सजोषा इन्द्र एका ॥१॥ महाँ इन्द्र एका ॥ १ ॥
महाँ इन्द्रेत्येका ॥१॥ द्वाविंशत्यनुवाकेषु चत्वारिंशत् ॥४०॥
॥ इति शुक्लयजुःकाण्वसंहितायां सप्तमोऽध्यायः ॥७॥

## अथाष्टमोऽध्यायः ॥

कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे ।
उपोपेन्नु मघवन्भूय इन्नु ते दानं देवस्य पृच्यत आदित्येभ्यस्त्वा ॥१॥ १
कदा चन प्रयुच्छस्युभे निपासि जन्मनी ।
तुरीयादित्य सवनं त इन्द्रियमातस्था अमृतं दिव्यादित्येभ्यस्त्वा ॥२॥ २
यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृळयन्तः ।
आ वोऽर्वाची सुमतिर्ववृत्यादꣳहोश्चिद्या वरिवोवित्तरासदादित्येभ्यस्त्वा ।
विवस्वाँ३ आदित्यैष ते सोमपीथस्तस्मिन् मत्स्व ॥३॥ (१) ३

श्रदस्मै नरो वचसे दधातन यदाशीर्दा दंपती वाममश्नुतः ।
पुमान् पुत्रो जायते विन्दते वस्वधा विश्वाहारप एधते गृहे ॥१॥ (२) ४

वाममद्य सवितर्वाममु श्वो दिवेदिवे वाममस्मभ्यꣳ सावीः ।
वामस्य हि क्षयस्य देव भूरेरया धिया वामभाजः स्याम ॥१॥ (३) ५

उपयामगृहीतोऽसि सावित्रोऽसि चनोधाश्चनो मयि धेहि ।
जिन्व यज्ञं जिन्व यज्ञपतिं भगाय सवित्रे त्वा ॥१॥ (४) ६

उपयामगृहीतोऽसि सुशर्मासि सुप्रतिष्ठानो बृहदुक्षाय नमः ।
विश्वेभ्यस्त्वा देवेभ्य एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥१॥ (५) ७

उपयामगृहीतोऽसि बृहस्पतिसुतस्य ते देव सोम ।
इन्द इन्द्रियावतः पत्नीवतो ग्रहाँ३ ऋध्यासम् ॥१॥ ८
अहं परस्तादहमवस्ताद्यदन्तरिक्षं तदु मे पितास ।
अहꣳ सूर्यमुभयतो ददर्शाहं देवानां परमं गुहा यत् ॥२॥ ९
अग्ने वाक्पत्नि सजूर्देवेन त्वष्ट्रा । सोमं पिब स्वाहा ॥३॥ १०
प्रजापतिर्वृषासि रेतोधा रेतो मयि धेहि । प्रजापतेस्ते वृष्णो रेतोधसो रेतोधामशीय ॥४॥ (६) ११

उपयामगृहीतोऽसि हरिरसि हारियोजनो हरिभ्यां त्वा ।
हर्योर्धाना स्थ सहसोमा इन्द्राय ॥१॥ १२
यस्ते देव सोमाश्वसनिर्भक्षो यो गोसनिः ।
तस्य त इष्टयजुष स्तुतस्तोमस्य शस्तोक्थस्योपहूत उपहूतस्य भक्षयामि ॥२॥ (७) १३

युक्ष्वा हि केशिना हरी वृषणा कक्ष्यप्रा । अथा न इन्द्र सोमपा गिरामुपश्रुतिं चर ।
उपयामगृहीतोऽसीन्द्राय त्वा षोळशिने एष ते योनिरिन्द्राय त्वा षोळशिने ॥१॥ (८)१४

आतिष्ठ वृत्रहन् रथं युक्ता ते ब्रह्मणा हरी । अर्वाचीनꣳ सु ते मनो ग्रावा कृणोतु वग्नुना ।
उपयामगृहीतोऽसीन्द्राय त्वा षोळशिने एष ते योनिरिन्द्राय त्वा षोळशिने ॥१॥ (९)१५

इन्द्रमिद्धरी वहतोऽप्रतिधृष्टशवसम् । ऋषीणां च स्तुतीरुप यज्ञं च मानुषाणाम् ।
उपयामगृहीतोऽसीन्द्राय त्वा षोळशिने एष ते योनिरिन्द्राय त्वा षोळशिने ॥१॥(१०)१६

यस्मान्न जातः परो अन्यो अस्ति य आविवेश भुवनानि विश्वा ।
प्रजापतिः प्रजया सꣳरराणस्त्रीणि ज्योतीꣳषि सचते स षोळशी ॥१॥ १७
इन्द्रश्च सम्राड् वरुणश्च राजा तौ ते भक्षं चक्रतुरग्र एतम् ।
तयोरहमनु भक्षं भक्षयामि वाग्देवी जुषाणा सोमस्य तृप्यतु सह प्राणेन स्वाहा ॥२॥(११)१८

अग्न आयूꣳषि पवस आसुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनाम् ।
उपयामगृहीतोऽस्यग्नये त्वा वर्चस एष ते योनिरग्नये त्वा वर्चसे ।
अग्ने वर्चस्विन्वर्चस्वाꣳस्त्वं देवेष्वसि । वर्चस्वानहं मनुष्येषु भूयासम् ॥१॥ (१२) १९

अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम् । दधद्रयिं मयि पोषम् ।
उपयामगृहीतोऽस्यग्नये त्वा वर्चस एष ते योनिरग्नये त्वा वर्चसे ।
अग्ने वर्चस्विन्वर्चस्वाꣳस्त्वं देवेष्वसि । वर्चस्वानहं मनुष्येषु भूयासम् ॥१॥ (१३) २०

उत्तिष्ठन्नोजसा सह पीत्वी शिप्रे अवेपयः । सोममिन्द्र चमू सुतम् ।
उपयामगृहीतोऽसीन्द्राय त्वौजस एष ते योनिरिन्द्राय त्वौजसे ।
इन्द्रौजस्विन्नोजस्वाꣳस्त्वं देवेष्वसि । ओजस्वानहं मनुष्येषु भूयासम् ॥१॥ (१४) २१

अदृश्रमस्य केतवो वि रश्मयो जनाँ३ अनु । भ्राजन्तो अग्नयो यथा ।
उपयामगृहीतोऽसि सूर्याय त्वा भ्राज एष ते योनिः सूर्याय त्वा भ्राजे ।
सूर्य भ्राजस्विन्भ्राजस्वाꣳस्त्वं देवेष्वसि । भ्राजस्वानहं मनुष्येषु भूयासम् ॥१॥ (१५) २२

उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् ।
उपयामगृहीतोऽसि सूर्याय त्वा भ्राज एष ते योनिः सूर्याय त्वा भ्राजे ।
सूर्य भ्राजस्विन्भ्राजस्वाꣳस्त्वं देवेष्वसि । भ्राजस्वानहं मनुष्येषु भूयासम् ॥१॥ (१६) २३

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आ प्रा द्यावापृथिवी अन्तरिक्षꣳ सूर्य आत्मा जगतस्तस्थुषश्च ।
उपयामगृहीतोऽसि सूर्याय त्वा भ्राज एष ते योनिः सूर्याय त्वा भ्राजे ।
सूर्य भ्राजस्वन्भ्राजस्वाꣳस्त्वं देवेष्वसि ।
भ्राजस्वानहं मनुष्येषु भूयासम् ॥१॥ (१७) २४

वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः ।
यो अस्माँ२ अभिदासत्यधरं गमया तमः ।
उपयामगृहीतोऽसीन्द्राय त्वा विमृध एष ते योनिरिन्द्राय त्वा विमृधे ॥१॥ (१८) २५

वाचस्पतिं विश्वकर्माणमूतये मनोजुवं वाजे अद्या हुवेम ।
स नो विश्वानि हवनानि जोषद्विश्वशम्भूरवसे साधुकर्मा ।
उपयामगृहीतोऽसीन्द्राय त्वा विश्वकर्मण एष ते योनिरिन्द्राय त्वा विश्वकर्मणे ॥१॥ (१९) २६

विश्वकर्मन्हविषा वावृधानः स्वयं यजस्व पृथिवीमुत द्याम् ।
मुह्यन्त्वन्ये अभितः सपत्ना इहास्माकं मघवा सूरिरस्तु ।
उपयामगृहीतोऽसीन्द्राय त्वा विश्वकर्मण एष ते योनिरिन्द्राय त्वा विश्वकर्मणे ॥१॥ (२०) २७

विश्वकर्मन्हविषा वर्धनेन त्रातारमिन्द्रमकृणोरवध्यम् ।
तस्मै विशः समनमन्त पूर्वीरयमुग्रो विहव्यो यथासत् ।
उपयामगृहीतोऽसीन्द्राय त्वा विश्वकर्मण एष ते योनिरिन्द्राय त्वा विश्वकर्मणे ॥१॥ (२१) २८

उपयामगृहीतोऽस्यग्नये त्वा गायत्रछन्दसं गृह्णामीन्द्राय त्वा त्रिष्टुप्छन्दसं गृह्णामि ।
विश्वेभ्यस्त्वा देवेभ्यो जगच्छन्दसं गृह्णाम्यनुष्टुप्तेऽभिगरः ॥१॥ २९
प्रेशीनां त्वा पत्मन्नाधूनोमि कुकूननानां त्वा पत्मन्नाधूनोमि
भन्दनानां त्वा पत्मन्नाधूनोमि मदिन्तमानां त्वा पत्मन्नाधूनोमि ।
शुक्रं त्वा शुक्र आधूनोम्यह्नो रूपे सूर्यस्य रश्मिषु ॥२॥ ३०
ककुहꣳ रूपं वृषभस्य रोचते बृहत्सोमः सोमस्य पुरोगाः शुक्रः शुक्रस्य पुरोगाः ।
यत्ते सोमादाभ्यं नाम जागृवि तस्मै त्वा गृह्णामि तस्मै ते सोम सोमाय स्वाहा ॥३॥ ३१ [४११]

उशिक् त्वं देव सोमाग्नेः प्रियं पाथोऽपीहि वशी त्वं देव सोमेन्द्रस्य प्रियं पाथोऽपीहि ।
अस्मत्सखा त्वं देव सोम विश्वेषां देवानां प्रियं पाथोऽपीहि ॥४॥ (२२) ३२ [३।१]

कदाचन तिस्रः ॥ ३ ॥ अदुस्नकैका ॥ १ ॥ वामनदैका ॥ १ ॥ सविता एका ॥ १ ॥ सुदानस्वेका ॥ १ ॥
बृहस्पतिस्ततः ॥ ४ ॥ हरिरसि द्वे ॥ २ ॥ युक्ष्वा ह्येका ॥ १ ॥ आतिष्ठैका ॥ १ ॥ इन्द्रमित्येकैका ॥ १ ॥
यस्माद्ध जात इति द्वे ॥ २ ॥ अग्न आयूंष्येका ॥ १ ॥ अग्ने पवस्वैका ॥ १ ॥ वर्चिष्ठेत्येका ॥ १ ॥
अग्ने नेका ॥ १ ॥ उदु त्यनेका ॥ १ ॥ चित्रनेका ॥ १ ॥ वि न एका ॥ १ ॥ वाचस्पतिनेका ॥ १ ॥
विश्वकर्मन्नेका ॥ १ ॥ विश्वकर्मन्हवित्येका ॥ १ ॥ अग्नये त्वा चतस्रः ॥ ४ ॥
द्वात्रिंशत्यनुवाकेषु द्वात्रिंशत् ॥ ३२ ॥

॥ इति शुक्लयजुःकाण्वसंहितायां अष्टमोऽध्यायः ॥ ८ ॥

## अथ नवमोऽध्यायः ।

प्राणाय मे वर्चोदा वर्चसे पवस्व व्यानाय मे वर्चोदा वर्चसे पवस्व ।
उदानाय मे वर्चोदा वर्चसे पवस्व वाचे मे वर्चोदा वर्चसे पवस्व ॥१॥ १
क्रतूदक्षाभ्यां मे वर्चोदा वर्चसे पवस्व श्रोत्राय मे वर्चोदा वर्चसे पवस्व ।
चक्षुर्भ्यां मे वर्चोदसौ वर्चसे पवेथाम् ॥२॥ २
आत्मने मे वर्चोदा वर्चसे पवस्वौजसे मे वर्चोदा वर्चसे पवस्वायुषे मे वर्चोदा वर्चसे पवस्व ।
विश्वाभ्यो मे प्रजाभ्यो वर्चोदसौ वर्चसे पवेथाम् ॥३॥ ३
कोऽसि कतमोऽसि कस्यासि को नामासि ।
यस्य ते नामामन्महि यं त्वा सोमेनातीतृपाम ॥४॥ ४
भूर्भुवः स्वः सुप्रजाः प्रजया भूयासम् । सुवीरो वीरैः सुपोषः पोषैः ॥५॥ (१) ५

उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् ॥१॥ ६
चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आ प्रा द्यावापृथिवी अन्तरिक्षꣳ सूर्य आत्मा जगतस्तस्थुषश्च ॥२॥ ७
अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम ॥३॥ ८
अयं नो अग्निर्वरिवस्कृणोत्वयं मृधः पुर एतु प्रभिन्दन् ।
अयं वाजाञ्जयतु वाजसाता अयꣳ शत्रूञ्जयतु जर्हृषाणः स्वाहा ॥४॥ ९ [३।२]

रूपेण वो रूपमभ्यागां तुथो वो विश्ववेदा विभजतु ।
ऋतस्य पथा प्रेत चन्द्रदक्षिणाः ॥४॥ १०
वि स्वः पश्यन्व्यन्तरिक्षं यतस्व सदस्यैः ।
ब्राह्मणमद्य विदेय पितृमन्तं पैतृमत्यमृषिमार्षेयꣳ सुधातुदक्षिणम् ॥५॥ ११
अस्मद्राता देवत्रा गच्छ प्रदातारमाविश ।
अग्नये त्वा मह्यं वरुणो ददातु सोऽमृतत्वमश्यात् ॥७॥ १२
आयुर्दात्र एधि मयो मह्यं प्रतिग्रहीत्रे ।
रुद्राय त्वा मह्यं वरुणो ददातु सोऽमृतत्वमश्यात् । प्राणो दात्र एधि मयो मह्यं प्रतिग्रहीत्रे ।
बृहस्पतये त्वा मह्यं वरुणो ददातु सोऽमृतत्वमश्यात् । त्वग्दात्र एधि मयो मह्यं प्रतिग्रहीत्रे ।
यमाय त्वा मह्यं वरुणो ददातु सोऽमृतत्वमश्यात् ।
वयो दात्र एधि मयो मह्यं प्रतिग्रहीत्रे ॥८॥ १३
कोऽदात्कस्मा अदात्कामोऽदात्कामायादात् ।
कामो दाता कामः प्रतिग्रहीता कामैतत्ते तत्र काम सता भुनजामहै ॥९॥ (२) १४
समिन्द्र णो मनसा नेषि गोभिः सꣳ सूरिभिर्मघवन्त्सꣳ स्वस्त्या ।
सं ब्रह्मणा देवकृतं यदस्ति सं देवानाꣳ सुमतौ यज्ञियानाम् ॥१॥ १५
सं वर्चसा पयसा सं तनूभिरगन्महि मनसा सꣳ शिवेन ।
त्वष्टा सुदत्रो विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्टम् ॥२॥ १६
धाता रातिः सवितेदं जुषन्तां प्रजापतिर्निधिपा देवो अग्निः ।
त्वष्टा विष्णुः प्रजया सꣳरराणो यजमानाय द्रविणं दधातु ॥३॥ १७
सुगा वो देवाः सदना अकर्म य आजग्मेदꣳ सवनं जुषाणाः ।
भरमाणा वहमाना हवीꣳष्यस्मे धत्त वसवो वसूनि ॥४॥ १८
याँ३ आवह उशतो देव देवाꣳस्तान्प्रेरय स्वे अग्ने सधस्थे ।
जक्षिवाꣳसः पपिवाꣳसश्च विश्वेऽसुं घर्मꣳ स्वरातिष्ठतानु ॥५॥ १९
वयꣳ हि त्वा प्रयति यज्ञे अस्मिन्नग्ने होतारमवृणीमहीह ।
ऋधगया ऋधगुताशमिष्ठाः प्रजानन्यज्ञमुपयाहि विद्वान् ॥६॥ २०
देवा गातुविदो गातुमित्त्वा गातुमित । मनसस्पत इमं देव यज्ञꣳ स्वाहा वाते धाः ॥७॥ २१
यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छ स्वां योनिं गच्छ स्वाहा ।
एष ते यज्ञो यज्ञपते सहसूक्तवाकः सर्ववीरस्तं जुषस्व स्वाहा ॥८॥ (३) २२ [४३४]

माहिर्भूर्मा पृदाकुः । उरुꣳ हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ ।
अपदे पादा प्रतिधातवेऽकरुतापवक्ता हृदयाविधश्चित् ।
नमो वरुणायाभिष्ठितो वरुणस्य पाशः ॥१॥ २३
अग्नेरनीकमप आविवेशापां नपात् प्रतिरक्षन्नसुर्यम् ।
दमेदमे समिधं यक्ष्यग्ने प्रति ते जिह्वा घृतमुच्चरण्यत् स्वाहा ॥२॥ २४
समुद्रे ते हृदयमप्स्वन्तः सं त्वा विशन्त्वोषधीरुतापः ।
यज्ञस्य त्वा यज्ञपते सूक्तोक्तौ नमोवाके विधेम यत् स्वाहा ॥३॥ २५
देवीराप एष वो गर्भस्तꣳ सुप्रीतꣳ सुभृतं बिभृत ।
देव सोमैष ते लोकः परि च वक्षि शं च वक्षि । अवभृथ निचुम्पुण निचेरुरसि निचुम्पुण ।
अव देवैर्देवकृतमेनोऽयासिषमव मर्त्यैर्मर्त्यकृतं पुरुराव्णो देव रिषस्पाहि ।
देवानाꣳ समिदसि ॥४॥ (४) २६

एजतु दशमास्यो गर्भो जरायुणा सह ।
यथायं वायुरेजति यथा समुद्र एजत्येवायं दशमास्यो अस्रज्जरायुणा सह ॥१॥ २७
यस्यास्ते यज्ञियो गर्भो यस्या योनिर्हिरण्ययी ।
अङ्गान्यह्रुता यस्य तं मात्रा समजीगमꣳ स्वाहा ॥२॥ २८
पुरुदस्मो विषुरूप इन्दुरन्तर्महिमानमानञ्ज धीरः ।
एकपदीं द्विपदीं त्रिपदीं चतुष्पदीमष्टापदीं भुवनानु प्रथन्ताꣳ स्वाहा ॥३॥ २९
मरुतो यस्य हि क्षये पाथा दिवो विमहसः । स सुगोपातमो जनः ॥४॥ ३०
मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् । पिपृतां नो भरीमभिः ॥५॥ (५) ३१

आजिघ्र कलशं मह्या त्वा विशन्त्विन्दवः ।
पुनरूर्जा निवर्तस्व सा नः सहस्रं धुक्ष्वोरुधारा पयस्वती पुनर्माविशताद्रयिः ॥१॥ ३२
हव्ये काम्ये इळे रन्ते चन्द्रे ज्योतेऽदिते सरस्वति महि विश्रुति ।
एता ते अघ्न्ये नामानि देवेभ्यो मा सुकृतं ब्रूतात् ॥२॥ ३३
इह रतिरिह रमध्वमिह धृतिरिह स्वधृतिः स्वाहा ।
उपसृजं धरुणं मात्रे धरुणो मातरं धयन्रायस्पोषमस्मासु दीधरत् स्वाहा ॥३॥ ३४
अगन्म ज्योतिरमृता अभूम दिवं पृथिव्या अध्यारुहाम ।
अविदाम देवान्त्स्वर्ज्योतिः ॥४॥ ३५ [४४७]

युवं तमिन्द्रापर्वता पुरोयुधा यो नः पृतन्यादप तंतमिद्धतं वज्रेण तंतमिद्धतम् ।
दूरे चत्ताय छन्त्सद्गहनं यदिनक्षदस्माकँ शत्रून् परि शूर विश्वतो दर्मा दर्षीष्ट विश्वतः ॥५॥ ३६
भूर्भुवः स्वः सुप्रजाः प्रजया भूयासम् । सुवीरो वीरैः सुपोषः पोषैः ॥६॥ (६) ३७

परमेष्ठ्यभिधीतः प्रजापतिर्वाचि व्याहृतायामन्धो अच्छेतः सविता सन्याम् ।
विश्वकर्मा दीक्षायां पूषा सोमक्रयण्याम् ॥१॥ ३८
इन्द्रश्च मरुतश्च क्रयायोपोत्थितः । असुरः पण्यमानो मित्रः क्रीतः ॥२॥ ३९
विष्णुः शिपिविष्ट ऊरा आसन्नो विष्णुर्नरन्धिषः प्रोह्यमाणः ।
सोम आगतो वरुण आसन्द्यामासन्नः ॥३॥ ४०
अग्निराग्नीध्र इन्द्रो हविर्धाने । अथर्वोपावह्रियमाणो विश्वे देवा अँशुषु न्युप्यमानेषु ॥४॥ ४१
विष्णुराप्रीतपा आप्याय्यमानो यमः सूयमानो विष्णुः संभ्रियमाणः । वायुः पूयमानः शुक्रः पूतः ५।४२
शुक्रः क्षीरश्रीर्मन्थी सक्तुश्रीः । विश्वे देवाश्चमसेषून्नीतोऽसुर्होमायोद्यतः ॥६॥ ४३
रुद्रो हूयमानो वातोऽभ्यावृत्तो नृचक्षाः प्रतिख्यातो भक्षः पीतः पितरो नाराशँसाः साद्यमानः ।
सिन्धुरवभृथायोद्यतः समुद्रोऽभ्यवह्रियमाणः सलिलः प्रप्लुतः । ॥७॥ ४४
ययोरोजसा स्कभिता रजाँसि वीर्येभिर्वीरतमा शविष्ठा ।
या पत्येते अप्रतीता सहोभिर्विष्णू अगन्वरुणा पूर्वहूतौ ॥८॥ ४५
देवान् दिवमगन्यज्ञस्ततो मा द्रविणमष्टु मनुष्यानन्तरिक्षमगन्यज्ञस्ततो मा द्रविणमष्टु ।
पितॄन् पृथिवीमगन्यज्ञः ततो मा द्रविणमष्टु यं कं च
लोकमगन्यज्ञस्ततो मे भद्रमभूत् ॥९॥ (७) ४६ [४५८]

प्राणाय मे पञ्च ॥५॥ उदु त्यं नव ॥९॥ समिद्ध नोऽष्ट ॥८॥ माहिर्भूरलसः ॥४॥ एजतु दशमास्यः पञ्च ॥५॥
आग्निश्च षट् ॥ ६ ॥ परमेष्ठी नव ॥ ९ ॥ सप्तानुवाकेषु षट्चत्वारिंशत् ॥ ४६ ॥

॥ इति शुक्लयजुःकाण्वसंहितायां नवमोऽध्यायः ॥ ९ ॥

## अथ दशमोऽध्यायः ।

देव सवितः प्रसुव यज्ञं प्रसुवेमं भगाय ।
दिव्यो गन्धर्वः केतपाः केतं नः पुनातु वाचस्पतिर्नो अद्य वाजँ स्वदतु ॥१॥ १
ध्रुषदं त्वा नृषदं मनःसदम् ।
उपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् ॥२॥ २ [४६०]

अप्सुषदं त्वा घृतसदं व्योमसदम् ।
उपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् ।
पृथिविसदं त्वाऽन्तरिक्षसदं दिविसदं देवसदं नाकसदम् ।
उपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् ॥३॥ ३
अपाꣳ रसमुद्वयसꣳ सूर्ये सन्तꣳ समाहितम् । अपाꣳ रसस्य यो रसस्तं वो गृह्णाम्युत्तमम् ।
उपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् ॥४॥ ४
ग्रहा ऊर्जाहुतयो व्यन्तो विप्राय मतिम् । तेषां विशिप्रियाणां वोऽहमिषमूर्जꣳ समग्रभम् ।
उपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् ॥५॥ ५
संपृचं स्थ सं मा भद्रेण पृङ्क्त । विपृचं स्थ वि मा पाप्मना पृङ्क्त ॥६॥ (१) ६

इन्द्रस्य वज्रोऽसि वाजसास्त्वया यं वाजꣳ सेत् ।
वाजस्य नु प्रसवे मातरं महीमदितिं नाम वचसा करामहे ।
यस्यामिदं विश्वं भुवनमाविवेश तस्यां नो देवः सविता धर्म साविषत् ॥१॥ ७
देवीरापो अपांनपाद्यो व ऊर्मिः प्रतूर्तिः । ककुन्मान् वाजसास्तेनायं वाजꣳ सेत् ॥२॥ ८
अप्स्वन्तरमृतमप्सु भेषजमपामुत प्रशस्तिभिः । अश्वा भवत वाजिनः ॥३॥ ९
वातो वा वो मनो वा गन्धर्वाः सप्तविꣳशतिः । ते अग्रेऽश्वमयुञ्जꣳस्ते अस्मिञ्जवमादधुः ॥४॥ १०
वातरꣳहा भव वाजिन्युज्यमान इन्द्रस्येव दक्षिणः श्रियैधि ।
युञ्जन्तु त्वा मरुतो विश्ववेदस आ ते त्वष्टा पत्सु जवं दधातु ॥५॥ ११
जवो यस्ते वाजिन्निहितो गुहा यः श्येने परीत्तो अचरच्च वाते ।
तेन नो वाजिन् बलवान् बलेन वाजजिच्चैधि समने च पारयिष्णुः ॥६॥ १२
वाजिनो वाजजितो वाजꣳ सरिष्यन्तः । बृहस्पतेर्भागमवजिघ्रत ॥७॥ (२) १३

देवस्य वयꣳ सवितुः सवे सत्यसवसः । बृहस्पतेरुत्तमं नाकꣳ रुहेमेन्द्रस्योत्तमं नाकꣳ रुहेम ।
देवस्य वयꣳ सवितुः सवे सत्यसवसः। बृहस्पतेरुत्तमं नाकमरुहामेन्द्रस्योत्तमं नाकमरुहाम ॥१॥ १४
बृहस्पते वाजं जय बृहस्पतये वाचं वदत । बृहस्पतिं वाजं जापयत ॥२॥ १५
इन्द्र वाजं जयेन्द्राय वाचं वदत । इन्द्रं वाजं जापयत ॥३॥ १६
एषा वः सा सत्या संवागभूद्यया बृहस्पतिं वाजमजीजपत ।
आजीजपत बृहस्पतिं वाचं वनस्पतयो वि मुच्यध्वम् ॥४॥ १७
देवस्य वयꣳ सवितुः सवे सत्यसवसः । बृहस्पतेर्वाजजितो वाजं जेष्म ॥५॥ १८ [७७६]

वाजिनो वाजं जयताध्वन स्कभ्नन्तः । योजना मिमानाः काष्ठां गच्छत ॥६॥ १९
एष स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो अपिकक्ष आसनि ।
क्रतुं दधिक्रा अनु सन्तवीत्वत्पथामङ्काꣳस्यन्वापनीफणत् ॥७॥ २०
उत स्मास्य द्रवतस्तुरण्यतः पर्णं न वेरनुवाति प्रगर्धिनः ।
श्येनस्येव ध्रजतो अङ्कसं परि दधिक्राव्णः सहोर्जा तरित्रतः ॥८॥ २१
शं नो भवन्तु वाजिनो हवेषु देवताता मितद्रवः स्वर्काः ।
जम्भयन्तोऽहिं वृकꣳ रक्षाꣳसि सनेम्यस्मद्युयवन्नमीवाः ॥९॥ २२
ते नो अर्वन्तो हवनश्रुतो हवं विश्वे शृण्वन्तु वाजिनो मितद्रवः ।
सहस्रसा मेधसाता इव त्मना महो ये धनꣳ समिथेषु जभ्रिरे ॥१०॥ २३
वाजेवाजेऽवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः ।
अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः ॥११॥ २४
आ मा वाजस्य प्रसवो जगम्यादेमे द्यावापृथिवी विश्वरूपे ।
आ मा गन्तां पितरा मातरा युवमा मा सोमो अमृतत्वाय गम्यात् ॥१२॥ २५
वाजिनो वाजजितो वाजꣳ ससृवाꣳसः । बृहस्पतेर्भागमवजिघ्रत निमृजानाः ॥१३॥ (३) २६

आपये स्वाहा स्वापये स्वाहाऽपिजाय स्वाहा क्रतवे स्वाहा । वसवे स्वाहाऽहर्पतये स्वाहा ।
अह्ने मुग्धाय स्वाहा मुग्धाय वैनꣳशिनाय स्वाहा विनꣳशिन आन्त्यायनाय स्वाहान्त्याय
भौवनाय स्वाहा भुवनस्य पतये स्वाहाधिपतये स्वाहा ॥१॥ २७
आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतां चक्षुर्यज्ञेन कल्पताꣳ श्रोत्रं यज्ञेन कल्पताम् ।
पृष्ठं यज्ञेन कल्पतां यज्ञो यज्ञेन कल्पताम् ॥२॥ २८
जाय एहि स्वो रोहाव । प्रजापतेः प्रजा अभूम स्वर्देवा अगन्मामृता अभूम ॥३॥ २९
अस्मे वो अस्त्विन्द्रियमस्मे नृम्णमुत क्रतुः । अस्मे वर्चाꣳसि सन्तु वः ॥४॥ ३०
नमो मात्रे पृथिव्या इयं ते राड्यन्तासि यमनः ।
ध्रुवोऽसि धरुणः कृष्यै क्षेमाय रय्यै पोषाय ॥५॥ (४) ३१

वाजस्येमं प्रसवः सुषुवेऽग्रे सोमꣳ राजानमोषधीष्वप्सु ।
ता अस्मभ्यं मधुमतीर्भवन्तु वयꣳ राष्ट्रे जागृयाम पुरोहिताः ॥१॥ ३२
वाजस्येदं प्रसव आबभूवेमा च विश्वा भुवनानि सर्वतः ।
सनेमि राजा परियाति विद्वान् रयिं पुष्टिं वर्धयमानो अस्मे ॥२॥ ३३ [४११]

वाजस्येमां प्रसवः शिश्रिये दिवमिमा च विश्वा भुवनानि सम्राट् ।
आदित्सन्तं दापयति प्रजानन्त्स नो रयिꣳ सर्ववीरं नियच्छतु ॥३॥ ३४
अग्ने अच्छावदेह नः प्रति नः सुमना भव ।
प्र नो यच्छ सहस्रजित्त्वꣳ हि धनदा असि ॥४॥ ३५
सोमꣳ राजानमवसेऽग्निमन्वारभामहे । आदित्यं विष्णुꣳ सूर्यं ब्रह्माणं च बृहस्पतिम् ॥५॥ ३६
प्र नो यच्छत्वर्यमा प्र पूषा प्र सरस्वती । प्र वाग्देवी ददातु नः ॥६॥ ३७
अर्यमणं बृहस्पतिमिन्द्रं दानाय चोदय । वाचं विष्णुꣳ सरस्वतीꣳ सवितारं च वाजिनम् ॥७॥ ३८
देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ।
सरस्वत्यै वाचो यन्तुर्यन्त्रियै दधामि ।
बृहस्पतेष्ट्वा साम्राज्येनाभिषिञ्चामीन्द्रस्य त्वा साम्राज्येनाभिषिञ्चामि ॥८॥ (५) ३९

अग्निरेकाक्षरेण प्राणमुदजयत् तमुज्जेषमश्विनौ द्व्यक्षरेण द्विपदो मनुष्यानुदजयतां तानुज्जेषम् ।
विष्णुस्त्र्यक्षरेण त्रीनिमाँल्लोकानुदजयत्तानुज्जेषꣳ सोमश्चतुरक्षरेण
चतुष्पदः पशूनुदजयत्तानुज्जेषम् ॥१॥ ४०
पूषा पञ्चाक्षरेण पञ्च ऋतूनुदजयत्तानुज्जेषꣳ सविता षळक्षरेण षळृतूनुदजयत्तानुज्जेषम् ॥
मरुतः सप्ताक्षरेण सप्त ग्राम्यान् पशूनुदजयꣳस्तानुज्जेषं
बृहस्पतिरष्टाक्षरेण गायत्रीमुदजयत्तामुज्जेषम् ॥२॥ ४१
मित्रो नवाक्षरेण त्रिवृतꣳ स्तोममुदजयत् तमुज्जेषं वरुणो दशाक्षरेण विराजमुदजयत्तामुज्जेषम् ।
इन्द्र एकादशाक्षरेण त्रिष्टुभमुदजयत्तामुज्जेषं विश्वे
देवा द्वादशाक्षरेण जगतीमुदजयꣳस्तामुज्जेषम् ॥३॥ ४२
वसवस्त्रयोदशाक्षरेण त्रयोदशꣳ स्तोममुदजयꣳस्तमुज्जेषꣳ
रुद्राश्चतुर्दशाक्षरेण चतुर्दशꣳ स्तोममुदजयꣳस्तमुज्जेषम् ।
आदित्याः पञ्चदशाक्षरेण पञ्चदशꣳ स्तोममुदजयꣳस्तमुज्जेष-
मदितिः षोळशाक्षरेण षोळशꣳ स्तोममुदजयत्तमुज्जेषम् ।
प्रजापतिः सप्तदशाक्षरेण सप्तदशꣳ स्तोममुदजयत्तमुज्जेषम् ॥४॥ (६) ४३ [५०१]

देव सवितष्षट् ॥ ६ ॥ इन्द्रस्य वज्रः सप्त ॥ ७ ॥ देवस्य वयं त्रयोदश ॥ १३ ॥ अग्नये पञ्च ॥ ५ ॥
वाजस्येममष्ट ॥ ८ ॥ अग्निरेकाक्षरेण चतस्रः ॥ ४ ॥ षळनुवाकेषु त्रयश्चत्वारिंशत् ॥ ४३ ॥ देव सवितः
तर्न त्रयश्चत्वारिंशत् ॥ इति शुक्लयजुःकाण्वसंहितायां दशमोऽध्यायः ॥ १० ॥

इति प्रथमो दशकः ॥ १ ॥

अथ द्वितीयो दशकः ॥ २ ॥

## अथ प्रथमोऽध्यायः ( अथैकादशोऽध्यायः ) ।

एष ते निर्ऋते भागस्तं जुषस्व स्वाहाऽग्निनेत्रेभ्यो देवेभ्यः पुरःसद्भ्यः स्वाहा
यमनेत्रेभ्यो देवेभ्यो दक्षिणसद्भ्यः स्वाहा ।
विश्वदेवनेत्रेभ्यो देवेभ्यः पश्चात्सद्भ्यः स्वाहा मित्रावरुणनेत्रेभ्यो
वा मरुन्नेत्रेभ्यो वा देवेभ्य उत्तरसद्भ्यः स्वाहा ।
सोमनेत्रेभ्यो देवेभ्य उपरिसद्भ्यो दुवस्वद्भ्यः स्वाहा ॥१॥ १
ये देवा अग्निनेत्राः पुरःसदस्तेभ्यः स्वाहा ये देवा यमनेत्रा दक्षिणसदस्तेभ्यः स्वाहा ।
ये देवा विश्वदेवनेत्राः पश्चात्सदस्तेभ्यः स्वाहा ये देवा
मित्रावरुणनेत्रा वा मरुन्नेत्रा वोत्तरसदस्तेभ्यः स्वाहा ।
ये देवाः सोमनेत्रा उपरिसदो दुवस्वन्तस्तेभ्यः स्वाहा ॥२॥ २
अग्ने सहस्व पृतना अभिमातीरपास्य । दुष्टरस्तरन्नरातीर्वर्चो धा यज्ञवाहसि ।
देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ॥३॥ ३
उपाꣳशोर्वीर्येण जुहोमि हतꣳ रक्षः स्वाहा । रक्षसां त्वा वधायावधिष्म रक्षोऽमुष्य
त्वा वधायावधिष्म । जुषाणोऽध्वाज्यस्य वेतु स्वाहा ॥४॥ (१) ४

अपो देवा मधुमतीरगृभ्णन्नूर्जस्वती राजस्वश्चितानाः ।
याभिर्मित्रावरुणा अभ्यषिञ्चन्याभिरिन्द्रमनयन्नत्यरातीः ॥१॥ ५
वृष्ण ऊर्मिरसि राष्ट्रदा राष्ट्रं मे देहि स्वाहा वृष्ण ऊर्मिरसि राष्ट्रदा राष्ट्रममुष्मै देहि ।
वृषसेनोऽसि राष्ट्रदा राष्ट्रं मे देहि स्वाहा वृषसेनोऽसि राष्ट्रदा राष्ट्रममुष्मै देहि ॥२॥ ६ [५०७]
अर्थेत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहार्थेत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त ।
ओजस्वती स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहौजस्वती स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त ।
आपः परिवाहिनी स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहापः परिवाहिणी स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त ।
अपां पतिरसि राष्ट्रदा राष्ट्रं मे देहि स्वाहापां पतिरसि राष्ट्रदा राष्ट्रममुष्मै देहि ।
अपां गर्भोऽसि राष्ट्रदा राष्ट्रं मे देहि स्वाहापां गर्भोऽसि राष्ट्रदा राष्ट्रममुष्मै देहि ।
सूर्यवर्चस स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा सूर्यवर्चस स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त ।
सूर्यत्वच स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा सूर्यत्वच स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त ।
व्रजक्षित स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा व्रजक्षित स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त ।

वाशा स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा वाशा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त ।
मांदा स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा मांदा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त ।
शक्वरी स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा शक्वरी स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त ।
जनभृत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा जनभृत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त ।
विश्वभृत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा विश्वभृत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त ।
शैष्ठा स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा शैष्ठा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त ।
आपः स्वाराज्ञी स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त ॥३॥ ७
सं मधुमतीर्मधुमतीभिः पृच्यंतां महि क्षत्रं क्षत्रियाय वन्वानाः ।
अनाधृष्टाः सीदत सहौजसा महि क्षत्रं क्षत्रियाय दधतीः ॥४॥ (२) ८

सविता त्वा प्रसवानां सुवतामग्निर्गृहपतीनां सोमो वनस्पतीनाम् ।
बृहस्पतिर्वाच इन्द्रो ज्यैष्ठ्याय रुद्रः पशुभ्यो मित्रः सत्याय वरुणो धर्मपतीनाम् ॥१॥ ९
इमं देवा असपत्नं सुवध्वं महते क्षत्राय महते ज्यैष्ठ्याय ।
इममुममुष्य पुत्रममुष्यैः पुत्रमस्यै विशे ॥२॥ १०
एष वः कुरवो राजैष वः पञ्चाला राजा । सोमोऽस्माकं ब्राह्मणानां राजा ॥३॥ (३) ११

सोमस्य त्विषिरस्यग्नये स्वाहा सोमाय स्वाहा सवित्रे स्वाहा सरस्वत्यै स्वाहा ।
पूष्णे स्वाहा बृहस्पतये स्वाहा ॥१॥ १२
इंद्राय स्वाहा घोषाय स्वाहा श्लोकाय स्वाहा अंशाय स्वाहा भगाय स्वाहार्यम्णे स्वाहा ।
सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ।
अनिभृष्टमसि वाचो बन्धुस्तपोजाः सोमस्य दात्रमसि स्वाहा राजस्वः ॥२॥ १३
सधमादो द्युम्निनीराप एता अनाधृष्टा अपस्यो वसानाः ।
पस्त्यासु चक्रे वरुणः सधस्थमपां शिशुर्मातृतमास्वन्तः ॥३॥ १४
क्षत्रस्योल्बमसि क्षत्रस्य जराय्वसि क्षत्रस्य नाभिरसि क्षत्रस्य योनिरसि ।
इन्द्रस्य वार्त्रघ्नमसि त्वयायं वृत्रं वध्यान्मित्रस्यासि वरुणस्यासि ॥४॥ १५
रुजासि दुवासि क्षुमासि । पातैनं प्राञ्चं पातैनं प्रत्यञ्चं पातैनं तिर्यञ्चं दिग्भ्यः पात ॥५॥ १६
आविर्मर्या आवित्तो अग्निर्गृहपतिरावित्त इन्द्रो वृद्धश्रवाः
आवित्तः पूषा विश्ववेदा आवित्तौ मित्रावरुणौ ऋतावृधौ ।
आवित्ते द्यावापृथिवी विश्वशंभू आवित्तादितिरुरुशर्मा ॥६॥ (४) १७ [५१८]

अवेष्टा दन्दशूकाः प्राचीमारोह गायत्री त्वावतु ।
रथन्तरꣳ साम त्रिवृत्स्तोमो वसन्तऋतुर्ब्रह्म द्रविणम् ॥१॥ १८
दक्षिणामारोह त्रिष्टुप् त्वावतु । बृहत्साम पञ्चदश स्तोमो ग्रीष्मऋतुः क्षत्रं द्रविणम् ॥२॥ १९
प्रतीचीमारोह जगती त्वावतु । वैरूपꣳ साम सप्तदश स्तोमो वर्षा ऋतुर्विड् द्रविणम् ॥३॥ २०
उदीचीमारोहानुष्टुप् त्वावतु । वैराजꣳ सामैकविꣳश स्तोमः शरदृतुः फलं द्रविणम् ॥४॥ २१
ऊर्ध्वामारोह पङ्क्तिस्त्वावतु ।
शाक्वररैवते सामनी त्रिणवत्रयस्त्रिꣳशौ स्तोमौ हेमन्तशिशिरा ऋतू वर्चो द्रविणम् ।
प्रत्यस्तं नमुचेः शिरः ॥५॥ २२
सोमस्य त्विषिरसि तवेव मे त्विषिर्भूयात् । मृत्योः पाह्योजोऽसि सहोऽस्यमृतमसि ॥६॥ २३
हिरण्यरूपा उषसो विरोक उभा इन्द्रा उदितः सूर्यश्च ।
आरोहतं वरुण मित्र गर्तं ततश्चक्षाथामदितिं दितिं च । मित्रोऽसि वरुणोऽसि ॥७॥(५) २४

सोमस्य त्वा द्युम्नेनाभिषिञ्चाम्यग्नेर्भ्राजसा सूर्यस्य वर्चसा ।
इन्द्रस्येन्द्रियेण मरुतामोजसा क्षत्राणां क्षत्रपतिरेध्यति दिद्यून्पाहि ॥१॥ २५
इमं देवा असपत्नꣳ सुवध्वं महते क्षत्राय महते ज्यैष्ठ्याय महते जानराज्याय ।
इममुममुष्य पुत्रममुष्याः पुत्रमस्यै विशे ॥२॥ २६
एष वः कुरवो राजैष वः पञ्चाला राजा । सोमोऽस्माकं ब्राह्मणानाꣳ राजा ॥३॥ २७
प्र पर्वतस्य वृषभस्य पृष्ठान्नावश्चरन्ति स्वसिच इयानाः ।
ता आववृत्रन्नधरागुदक्ता अहिं बुध्न्यमनु रीयमाणाः ।
विष्णोर्विक्रमणमसि विष्णोर्विक्रान्तमसि विष्णोः क्रान्तमसि ॥४॥ २८
प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परि ता बभूव ।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयꣳ स्याम पतयो रयीणाम् ॥५॥ २९
रुद्र यत्ते क्रिवि परं नाम । तस्मै हुतमस्यमेष्टमसि स्वाहा ॥६॥ ६ ३०

इन्द्रस्य वज्रोऽसि मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मि ।
अव्यथायै त्वा स्वधायै त्वारिष्टः फल्गुनः ।
मरुतां प्रसवेन जयापाम मनसा समिन्द्रियेण ॥१॥ ३१
मा त इन्द्र ते वयं तुराषाळयुक्तासो अब्रह्मता विदसाम ।
तिष्ठा रथमधि यं वज्रहस्ता रश्मीन्देव युवसे स्वश्वान् ॥२॥ ३२ [५३३]

अग्नये गृहपतये स्वाहा सोमाय वनस्पतये स्वाहा ।
इन्द्रस्येन्द्रियाय स्वाहा मरुतामोजसे स्वाहा ।
पृथिवि मातर्मा मा हिंसीर्मो अहं त्वाम् ॥३॥ ३३
हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।
नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥४॥ ३४
इयदस्यायुरस्यायुर्मे धेहि युङ्ङसि वर्चोऽसि वर्चो मे धेहि ।
ऊर्गस्यूर्जं मयि धेहीन्द्रस्य वां बाहू वीर्यकृता उपावहरामि ॥५॥ (७) ३५

स्योनासि सुषदासि क्षत्रस्य योनिरसि ।
स्योनामासीद सुषदामासीद क्षत्रस्य योनिमासीद ॥१॥ ३६
निषसाद धृतव्रतो वरुणः पस्त्यास्वा । साम्राज्याय सुक्रतुः ॥२॥ ३७
अभिभूरस्ययानामेतास्ते पञ्च दिशः कल्पन्ताम् । ब्रह्मँस्त्वं ब्रह्मासि ॥३॥ ३८
सवितासि सत्यप्रसवो वरुणोऽसि सत्यौजाः ।
इन्द्रोऽसि विशौजा रुद्रोऽसि सुशेवः ॥४॥ ३९
बहुकार श्रेयस्कर भूयस्कर । इन्द्रस्य वज्रोऽसि तेन मे रध्य ॥५॥ ४०
अग्निः पृथुर्धर्मणस्पतिर्जुषाणो अग्निः पृथुर्धर्मणस्पतिः । आज्यस्य हविषो वेतु स्वाहा ।
स्वाहाकृताः सूर्यस्य रश्मिभिर्यतध्वँ सजातानां मध्यमेष्ठ्याय ॥६॥ (८) ४१

सवित्रा प्रसवित्रा सरस्वत्या वाचा । त्वष्ट्रा रूपैः पूष्णा पशुभिरिन्द्रेणास्मे ॥१॥ ४२
बृहस्पतिना ब्रह्मणा वरुणेनौजसाग्निना तेजसा सोमेन राज्ञा ।
विष्णुना देवतया दशम्येमं यज्ञं विष्णुमाप्नवानि ॥२॥ (९) ४३

अश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्व ।
वायोः पूतः पवित्रेण प्रत्यङ् सोमो अतिद्रुतः । इन्द्रस्य युज्यः सखा ॥१॥ ४४
कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूय ।
इहेहैषां कृणुहि भोजनानि ये बर्हिषो नमउक्तिं न जग्मुः ।
उपयामगृहीतोऽस्यश्विभ्यां त्वा सरस्वत्यै त्वेन्द्राय त्वा सुत्राम्णे ॥२॥ ४५
युवँ सुराममश्विना नमुचा आसुरे सचा ।
विपिपाना शुभस्पती इन्द्रं कर्मस्वावतम् ॥३॥ ४६ [५८७]

पुत्रमिव पितरावश्विनोभेन्द्रावथुः काव्यैर्दंसनाभिः ।
यत्सुरामं व्यपिबः शचीभिः सरस्वती त्वा मघवन्नभिष्णक् ॥४॥ (१०) ४७ [५४८]

एष ते चत्वारः ॥ ४ ॥ अपो देवाश्चतस्रः ॥४॥ सविता त्वा तिस्रः ॥ ३ ॥ सोमस्य त्विषि षट् ॥६॥ अवेष्टा सप्त ॥ ७ ॥ सोमस्य त्वा षट् ॥ ६ ॥ इन्द्रस्य वज्रः पञ्च ॥५॥ स्योनासि षट् ॥ ६ ॥ सविता द्वे ॥ २ ॥ अश्विभ्यां चतस्रः ॥ ४ ॥ दशानुवाकेषु सप्तचत्वारिंशत् ॥४७॥

॥ इति शुक्लयजुःकाण्वसंहितायां एकादशोऽध्यायः ॥११॥

## अथ द्वादशोऽध्यायः ।

युञ्जानः प्रथमं मनस्तत्त्वाय सविता धियः । अग्नेर्ज्योतिर्निचाय्य पृथिव्या अध्याभरत् ॥१॥ १
युक्तेन मनसा वयं देवस्य सवितुः सवे । स्वर्ग्याय शक्त्या ॥२॥ २
युक्त्वाय सविता देवान्त्स्वर्यतो धिया दिवम् ।
बृहज्ज्योतिः करिष्यतः सविता प्रसुवाति तान् ॥३॥ ३
युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः ।
वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः ॥४॥ ४
युजे वां ब्रह्म पूर्व्यं नमोभिर्वि श्लोक एतु पथ्येव सूरेः ।
शृण्वन्तु विश्वे अमृतस्य पुत्रा आ ये धामानि दिव्यानि तस्थुः ॥५॥ ५
यस्य प्रयाणमन्वन्य इद्ययुर्देवा देवस्य महिमानमोजसा ।
यः पार्थिवानि विममे स एतशो रजाꣳसि देवः सविता महित्वना ॥६॥ ६
देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय ।
दिव्यो गन्धर्वः केतपूः केतं नः पुनातु वाचस्पतिर्वाचं नः स्वदतु ॥७॥ ७
इमं नो देव सवितर्यज्ञं प्रणय देवाव्यꣳ सखिविदꣳ सत्राजितं धनजितꣳ स्वर्जितम् ।
ऋचा स्तोमꣳ समर्धय गायत्रेण रथन्तरं बृहद्गायत्रवर्तनि स्वाहा ॥८॥ ८
देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ।
आददे गायत्रेण छन्दसाङ्गिरस्वत् । पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वदाभर ।
त्रैष्टुभेन छन्दसाङ्गिरस्वत् ॥९॥ ९ [५५७]

अग्निरसि नार्यसि त्वया वयमग्निꣳ शकेम खनितुम् ।
सधस्थ आ जागतेन छन्दसाङ्गिरस्वत् ॥१०॥ १०
हस्त आधाय सविता बिभ्रदभ्रिꣳ हिरण्ययीम् ।
अग्नेर्ज्योतिर्निचाय्य पृथिव्या अध्याभरदानुष्टुभेन छन्दसाङ्गिरस्वत् ॥११॥ (१) ११

प्रतूर्त्तं वाजिन्नाद्रव वरिष्ठामनु संवतम् ।
दिवि ते जन्म परममन्तरिक्षे तव नाभिः पृथिव्यामधि योनिरित् ॥१॥ १२
युञ्जाथाꣳ रासभं युवमस्मिन् यामे वृषण्वसू । अग्निं भरन्तमस्मयुम् ॥२॥ १३
योगेयोगे तवस्तरं वाजेवाजे हवामहे । सखाय इन्द्रमूतये ॥३॥ १४
प्रतूर्वन्नेह्यवक्रामन्नशस्ती रुद्रस्य गाणपत्यं मयोभूरेहि ।
उर्वन्तरिक्षं वीहि स्वस्तिगव्यूतिरभयानि कृण्वन् पूष्णा सयुजा सह ॥४॥ १५
पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वदाभर ।
अग्निं पुरीष्यमङ्गिरस्वदच्छेमोऽग्निं पुरीष्यमङ्गिरस्वद्भरिष्यामः ॥५॥ १६
अन्वग्निरुषसामग्रमख्यदन्वहानि प्रथमो जातवेदाः ।
अनु सूर्यस्य पुरुत्रा च रश्मीननु द्यावापृथिवी आततन्थ ॥६॥ १७
आगत्य वाज्यध्वानꣳ सर्वा मृधो विधूनुते । अग्निꣳ सधस्थे महति चक्षुषा निचिकीषते ॥७॥ १८
आक्रम्य वाजिन्पृथिवीमग्निमिच्छ रुचा त्वम् । भूम्या वृत्वाय नो ब्रूहि यतः खनेम तं वयम् ॥८॥ १९
द्यौस्ते पृष्ठं पृथिवी सधस्थमात्मान्तरिक्षꣳ समुद्रो योनिः ।
विख्याय चक्षुषा त्वमभि तिष्ठ पृतन्यतः ॥९॥ २०
उत्क्राम महते सौभगायास्मादास्थानाद् द्रविणोदा वाजिन् ।
वयꣳ स्याम सुमतौ पृथिव्या अग्निं खनन्त उपस्थे अस्याः ॥१०॥ २१
उदक्रमीद् द्रविणोदा वाज्यर्वाकः सुलोकꣳ सुकृतं पृथिव्याम् ।
ततः खनेम सुप्रतीकमग्निꣳ स्वो रुहाणा अधि नाकमुत्तमम् ॥११॥ २२
आ त्वा जिघर्मि मनसा घृतेन प्रतिक्षियन्तं भुवनानि विश्वा ।
पृथुं तिरश्चा वयसा बृहन्तं व्यचिष्ठमन्नै रभसं दृशानम् ॥१२॥ २३
आ विश्वतः प्रत्यञ्चं जिघर्म्यरक्षसा मनसा तज्जुषेत ।
मर्यश्रीः स्पृहयद्वर्णो अग्निर्नाभिमृशे तन्वा जर्भुराणः ॥१३॥ २४
परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् । दधद्रत्नानि दाशुषे ॥१४॥ २५ [५७१]

परि त्वाग्ने पुरं वयं विप्रँ सहस्य धीमहि । धृषद्वर्णं दिवेदिवे भेत्तारं भङ्गुरावताम् ॥१५॥२६
त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि ।
त्वं वनेभ्यस्त्वमोषधीभ्यस्त्वं नृणां नृपते जायसे शुचिः ॥१६॥ (२) २७

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ।
पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वत् खनामि ।
ज्योतिष्मन्तं त्वाग्ने सुप्रतीकमजस्रेण भानुना दीद्यतम् ।
शिवं प्रजाभ्योऽहिँसन्तं पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वत्खनामः ॥१॥ २८
अपां पृष्ठमसि योनिरग्नेः समुद्रमभितः पिन्वमानम् ।
वर्धमानो महाँ आ च पुष्करे दिवो मात्रया वरिम्णा प्रथस्व ॥२॥ २९
शर्म च स्थो वर्म च स्थोऽछिद्रे बहुले उभे । व्यचस्वती संवसाथां भृतमग्निं पुरीष्यम् ॥३॥ ३०
संवसाथाँ स्वर्विदा समीची उरसा त्मना । अग्निमन्तर्भरिष्यन्ती ज्योतिष्मन्तमजस्रमित् ।
पुरीष्योऽसि विश्वभरा अथर्वा त्वा प्रथमो निरमन्थदग्ने ॥४॥ ३१
त्वामग्ने पुष्करादध्यथर्वा निरमन्थत । मूर्ध्नो विश्वस्य वाघतः ॥५॥ ३२
तमु त्वा दध्यङ् ऋषिः पुत्र ईधे अथर्वणः । वृत्रहणं पुरन्दरम् ॥६॥ ३३
तमु त्वा पाथ्यो वृषा समीधे दस्युहन्तमम् । धनञ्जयँ रणेरणे ॥७॥ ३४
सीद होतः स्व उ लोके चिकित्वान्त्सादया यज्ञँ सुकृतस्य योनौ ।
देवावीर्देवान्हविषा यजास्यग्ने बृहद्यजमाने वयो धाः ॥८॥ ३५
नि होता होतृषदने विदानस्त्वेषो दीदिवाँ असदत्सुदक्षः ।
अदब्धव्रतप्रमतिर्वसिष्ठः सहस्रं भरः शुचिजिह्वो अग्निः ॥९॥ ३६
सँसीदस्व महाँ३ असि शोचस्व देववीतमः ।
वि धूममग्ने अरुषं मियेध्य सृज प्रशस्त दर्शतम् ॥१०॥ (३) ३७

अपो देवीरुपसृज मधुमतीरयक्ष्माय प्रजाभ्यः । तासामास्थानादुज्जिहतामोषधयः सुपिप्पलाः ॥१॥३८
सं ते वायुर्मातरिश्वा दधातूत्तानाया हृदयं यद्विकस्तम् ।
यो देवानां चरसि प्राणथेन कस्मै देव वषळस्तु तुभ्यम् ॥२॥ ३९
सुजातो ज्योतिषा सह शर्म वरूथमासदत्स्वः । वासो अग्ने विश्वरूपँ संव्ययस्व विभावसो ॥३॥ ४०
उदु तिष्ठ स्वध्वरावा नो देव्या धिया ।
दृशे च भासा बृहता सुशुक्वनिराग्ने याहि सुशस्तिभिः ॥४॥ ४१ [५८९]

ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सविता ।
ऊर्ध्वो वाजस्य सनिता यदुञ्जिभिर्वाघद्भिर्विह्वयामहे ॥५॥ ४२
स जातो गर्भो असि रोदस्योरग्ने चारुर्विभृत ओषधीषु ।
चित्रः शिशुः परि तमाᳬंस्यक्तून्प्र मातृभ्यो अधि कनिक्रदद्गाः ॥६॥ ४३
स्थिरो भव वीड्वङ्ग आशुर्भव वाज्यर्वन् । पृथुर्भव सुषदस्त्वमग्नेः पुरीषवाहणः ॥७॥ ४४
शिवो भव प्रजाभ्यो मानुषीभ्यस्त्वमङ्गिरः ।
मा द्यावापृथिवी अभि शोचीर्मान्तरिक्षं मा वनस्पतीन् ॥८॥ ४५
प्रैतु वाजी कनिक्रदन्नानदद्रासभः पत्वा । भरन्नग्निं पुरीष्यं मा पाद्यायुषः पुरा ॥९॥ ४६
वृषाग्निं वृषणं भरन्नपां गर्भᳬं समुद्रियम् । अग्न आयाहि वीतये ।
ऋतᳬं सत्यमृतᳬं सत्यमग्निं पुरीष्यमङ्गिरस्वद्भरामः ॥१०॥ ४७
ओषधयः प्रतिमोदध्वमग्निमेतᳬं शिवमायन्तमभ्यत्र युष्माः ।
व्यस्यन् विश्वा अनिरा अमीवा निषीदन्नो अप दुर्मतिं जहि ॥११॥ ४८
ओषधयः प्रतिगृभ्णीत पुष्पवतीः सुपिप्पलाः ।
अयं वो गर्भ ऋत्वियः प्रत्नᳬं सधस्थमासदत् ॥१२॥ ४९
वि पाजसा पृथुना शोशुचानो बाधस्व द्विषो रक्षसो अमीवाः ।
सुशर्मणो बृहतः शर्मणि स्यामग्नेरहᳬं सुहवस्य प्रणीतौ ॥१३॥ (४) ५०

आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे ॥१॥ ५१
यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः ॥२॥ ५२
तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ॥३॥ ५३
मित्रः सᳬंसृज्य पृथिवीं भूमिं च ज्योतिषा सह ।
सुजातं जातवेदसमयक्ष्माय त्वा सᳬंसृजामि प्रजाभ्यः ॥४॥ ५४
रुद्राः सᳬंसृज्य पृथिवीं बृहज्ज्योतिः समीधिरे । तेषां भानुरजस्र इच्छुक्रो देवेषु रोचते ॥५॥ ५५
सᳬंसृष्टां वसुभी रुद्रैर्धीरैः कर्मण्यां मृदम् ।
हस्ताभ्यां मृद्वीं कृत्वा सिनीवाली कृणोतु ताम् ॥६॥ ५६
सिनीवाली सुकपर्दा सुकुरीरा स्वौपशा । सा तुभ्यमदिते मह्योखां दधातु हस्तयोः ॥७॥ ५७
उखां कृणोतु शक्त्या बाहुभ्यामदितिर्धिया ।
माता पुत्रं यथोपस्थे साग्निं बिभर्तु गर्भ आ ॥८॥ ५८ [१०१]

मखस्य शिरोऽसि वसवस्त्वा कृण्वन्तु गायत्रेण छन्दसाङ्गिरस्वद् ध्रुवासि पृथिव्यसि ।
धारया मयि प्रजाꣳ रायस्पोषं गौपत्यꣳ सुवीर्यꣳ सजातान्यजमानाय ।
रुद्रास्त्वा कृण्वन्तु त्रैष्टुभेन छन्दसाङ्गिरस्वद् ध्रुवास्यन्तरिक्षमसि ।
धारया मयि प्रजाꣳ रायस्पोषं गौपत्यꣳ सुवीर्यꣳ सजातान्यजमानाय ।
आदित्यास्त्वा कृण्वन्तु जागतेन छन्दसाङ्गिरस्वद् ध्रुवासि द्यौरसि ।
धारया मयि प्रजाꣳ रायस्पोषं गौपत्यꣳ सुवीर्यꣳ सजातान्यजमानाय ।
विश्वे त्वा देवा वैश्वानराः कृण्वन्त्वानुष्टुभेन छन्दसाङ्गिरस्वद् ध्रुवासि दिशोऽसि ।
धारया मयि प्रजाꣳ रायस्पोषं गौपत्यꣳ सुवीर्यꣳ सजातान्यजमानाय ।
अदित्यै रास्नास्यदितिष्टे बिलं गृभ्णातु ॥९॥ ५९
कृत्वाय सा महीमुखां मृन्मयीं योनिमग्नये । पुत्रेभ्यः प्रायच्छददितिः श्रपयानिति ॥१०॥ ६०
वसवस्त्वा धूपयन्तु गायत्रेण छन्दसाङ्गिरस्वद्रुद्रास्त्वा धूपयन्तु त्रैष्टुभेन छन्दसाङ्गिरस्वत् ।
आदित्यास्त्वा धूपयन्तु जागतेन छन्दसाङ्गिरस्वद्विश्वे त्वा देवा वैश्वानरा
धूपयन्त्वानुष्टुभेन छन्दसाङ्गिरस्वत् ।
इन्द्रस्त्वा धूपयतु वरुणस्त्वा धूपयतु विष्णुस्त्वा धूपयतु ॥११॥ (५) ६१

अदितिष्ट्वा देवी विश्वदेव्यावती । पृथिव्याः सधस्थे अङ्गिरस्वत् खनत्ववट ॥१॥ ६२
देवानां त्वा पत्नीर्देवीर्विश्वदेव्यावतीः । पृथिव्याः सधस्थे अङ्गिरस्वद्दधतूखे ।
धिषणास्त्वा देवीर्विश्वदेव्यावतीः । पृथिव्याः सधस्थे अङ्गिरस्वदभीन्धतामुखे ।
वरूत्रीष्ट्वा देवीर्विश्वदेव्यावतीः । पृथिव्याः सधस्थे अङ्गिरस्वच्छ्रपयन्तूखे ।
ग्नास्त्वा देवीर्विश्वदेव्यावतीः । पृथिव्याः सधस्थे अङ्गिरस्वत्पचन्तूखे ।
जनयस्त्वाच्छिन्नपत्रा देवीर्विश्वदेव्यावतीः । पृथिव्याः सधस्थे अङ्गिरस्वत्पचन्तूखे ॥२॥ ६३
मित्रस्य चर्षणीधृतोऽवो देवस्य सानसि । द्युम्नं चित्रश्रवस्तमम् ॥३॥ ६४
देवस्त्वा सवितोद्वपतु सुपाणिः स्वङ्गुरिः सुबाहुरुत शक्त्या ।
अव्यथमाना पृथिव्यामाशा दिश आपृण ॥४॥ ६५
उत्थाय बृहती भवोदु तिष्ठ ध्रुवा त्वम् । मित्रैतां त उखां परिददाम्यभित्त्या एषा मा भेदि ।
वसवस्त्वाछृन्दन्तु गायत्रेण छन्दसाङ्गिरस्वद्रुद्रास्त्वाछृन्दन्तु त्रैष्टुभेन छन्दसाङ्गिरस्वत् ।
आदित्यास्त्वाछृन्दन्तु जागतेन छन्दसाङ्गिरस्वद्विश्वे त्वा
देवा वैश्वानरा आछृन्दन्त्वानुष्टुभेन छन्दसाङ्गिरस्वत् ॥५॥ (६) ६६ [११४]

आकूतिमग्निं प्रयुजꣳ स्वाहा मनो मेधामग्निं प्रयुजꣳ स्वाहा ।
चित्तं विज्ञातमग्निं प्रयुजꣳ स्वाहा वाचो विधृतिमग्निं प्रयुजꣳ स्वाहा ।
प्रजापतये मनवे स्वाहाग्नये वैश्वानराय स्वाहा ॥१॥ ६७
विश्वो देवस्य नेतुर्मर्तो वुरीत सख्यम् । विश्वो राय इषुध्यति द्युम्नं वृणीत पुष्यसे स्वाहा ॥२॥ ६८
मा सु भित्था मा सु रिषोऽम्ब धृष्णु वीरयस्व सु । अग्निश्चेदं करिष्यथः ॥३॥ ६९
दृꣳहस्व देवि पृथिवि स्वस्तय आसुरी माया स्वधया कृतासि ।
जुष्टं देवेभ्य इदमस्तु हव्यमरिष्टा त्वमुदिहि यज्ञे अस्मिन् ॥४॥ ७०
घ्नंसः सर्पिरासुतिः प्रत्नो होता वरेण्यः । सहसस्पुत्रो अद्भुतः ॥५॥ ७१
परस्या अधि संवतोऽवराँ२ अभ्यातर । यत्राहमस्मि ताँ२ अव ॥६॥ ७२
परमस्याः परावतो रोहिदश्व इहागहि । पुरीष्यः पुरुप्रियोऽग्ने त्वं तरा मृधः ॥७॥ ७३
यदग्ने कानिकानि चिदा ते दारूणि दध्मसि । सर्वं तदस्तु ते घृतं तज्जुषस्व यविष्ठ्य ॥८॥ ७४
यदत्त्युपजिह्विका यद्वम्रो अतिसर्पति । सर्वं तदस्तु ते घृतं तज्जुषस्व यविष्ठ्य ॥९॥ ७५
अहरहरप्रयावं भरन्तोऽश्वायेव तिष्ठते घासमस्मै ।
रायस्पोषेण समिषा मदन्तोऽग्ने मा ते प्रतिवेशा रिषाम ॥१०॥ ७६
नाभा पृथिव्याः समिधाने अग्नौ रायस्पोषाय बृहते हवामहे ।
इरम्मदं बृहदुक्थं यजत्रं जेतारमग्निं पृतनासु सासहिम् ॥११॥ ७७
याः सेना अभीत्वरीराव्याधिनीरुगणा उत ।
ये स्तेना ये च तस्करास्ताꣳस्ते अग्नेऽपिदधाम्यास्ये ॥१२॥ ७८
दꣳष्ट्राभ्यां मलिम्लूञ्जम्भ्यैस्तस्कराँ२ उत ।
हनुभ्याꣳ स्तेनान् भगवस्ताꣳस्त्वं खाद सुखादितान् ॥१३॥ ७९
ये जनेषु मलिम्लव स्तेनासस्तस्करा वने ।
ये कक्षेष्वघायवस्ताꣳस्ते दधामि जम्भयोः ॥१४॥ ८०
यो अस्मभ्यमरातीयाद्यश्च नो द्वेषते जनः ।
निन्दाद्यो अस्मान्धिप्साच्च सर्वं तं मस्मसा कुरु ॥१५॥ ८१
सꣳशितं मे ब्रह्म सꣳशितं वीर्यं बलम् । सꣳशितं क्षत्रं जिष्णु यस्याहमस्मि पुरोहितः ॥१६॥ ८२
उदेषां बाहू अतिरमुद्वर्चो अथो बलम् । क्षिणोमि ब्रह्मणामित्रानुन्नयामि स्वाँ२ अहम् ॥१७॥ ८३
अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः ।
प्र प्र दातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे । विश्वकर्मणे स्वाहा ॥१८॥ ८४[६११]

पुनस्त्वादित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्माणो वसुनीथ यज्ञैः ।
घृतेन त्वं तन्वं वर्धयस्व सत्याः सन्तु यजमानस्य कामाः स्वाहा ॥१९॥ (७) ८५ [६३३]

युञ्जान एकादश ॥ ११ ॥ प्रतूर्तं वाजिन् षोडश ॥ १६ ॥ देवस्य त्वा दश ॥ १० ॥ अपो देवीस्त्रयोदश ॥ १३ ॥ आपो ह्येकादश ॥ ११ ॥ अदितिष्ट्वा पञ्च ॥ ५ ॥ आकूतिमेकोनविंशतिः ॥ १९ ॥ सप्तानुवाकेषु पञ्चाशीति ॥ ८५ ॥

॥ इति शुक्लयजुःकाण्वसंहितायां द्वादशोऽध्यायः ॥१२॥

## अथ त्रयोदशोऽध्यायः ।

दृशानो रुक्म उर्व्या व्यद्यौद्दुर्मर्षमायुः श्रिये रुचानः ।
अग्निरमृतो अभवद्वयोभिर्यदेनं द्यौरजनयत्सुरेताः ॥१॥ १
नक्तोषासा समनसा विरूपे धापयेते शिशुमेकꣳ समीची ।
द्यावाक्षामा रुक्मो अन्तर्विभाति देवा अग्निं धारयन्द्रविणोदाः ॥२॥ २
विश्वा रूपाणि प्रतिमुञ्चते कविः प्रासावीद्भद्रं द्विपदे चतुष्पदे ।
वि नाकमख्यत्सविता वरेण्योऽनु प्रयाणमुषसो विराजति ॥३॥ ३
सुपर्णोऽसि गरुत्माꣳस्त्रिवृत्ते शिरः । गायत्रं चक्षुर्बृहद्रथन्तरे पक्षौ ॥४॥ ४
स्तोम आत्मा छन्दाꣳस्यङ्गानि यजूꣳषि नाम ।
साम ते तनूर्वामदेव्यं यज्ञायज्ञियं पुच्छं धिष्ण्याः शफाः ॥५॥ ५
सुपर्णोऽसि गरुत्मान्दिवं गच्छ स्वः पत ।
विष्णोः क्रमोऽसि सपत्नहा गायत्रं छन्द आरोह । पृथिवीमनु विक्रमस्व ।
विष्णोः क्रमोऽस्यभिमातिहा त्रैष्टुभं छन्द आरोह । अन्तरिक्षमनु विक्रमस्व ।
विष्णोः क्रमोऽस्यरातीयतो हन्ता जागतं छन्द आरोह । दिवमनु विक्रमस्व ।
विष्णोः क्रमोऽसि शत्रूयतो हन्तानुष्टुभं छन्द आरोह । दिशोऽनु विक्रमस्व ॥६॥ ६
अक्रन्ददग्निः स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् ।
सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः ॥७॥ ७
अग्नेऽभ्यावर्तिन्नभि मा निवर्तस्वायुषा वर्चसा प्रजया धनेन ।
सन्या मेधया रय्या पोषेण ॥८॥ ८
अग्ने अङ्गिरः शतं ते सन्त्वावृतः सहस्रं त उपावृतः ।
अधा पोषस्य पोषेण पुनर्नो नष्टमाकृधि पुनर्नो रयिमाकृधि ॥९॥ ९ [६४२]

पुनरूर्जा निवर्तस्व पुनरग्न इषायुषा । पुनर्नः पाह्यꣳहसः ॥१०॥ १०
सह रय्या निवर्तस्वाग्ने पिन्वस्व धारया । विश्वप्स्न्या विश्वतस्परि ॥११॥ ११
आ त्वाहार्षमन्तरभूर्ध्रुवस्तिष्ठाविचाचलिः । विशस्त्वा सर्वा वाञ्छन्तु मा त्वद्राष्ट्रमधिभ्रशत् ॥१२॥ १२
उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमꣳ श्रथाय ।
अथा वयमादित्य व्रते तवानागसो अदितये स्याम ॥१३॥ १३
अग्ने बृहन्नुषसामूर्ध्वो अस्थान्निर्जगन्वान् तमसो ज्योतिषागात् ।
अग्निर्भानुना रुशता स्वङ्ग आ जातो विश्वा सद्मान्यप्राः ॥१४॥ १४
हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।
नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥१५॥ १५
सीद त्वं मातुरस्या उपस्थे विश्वान्यग्ने वयुनानि विद्वान् ।
मैनां तपसा मार्चिषाभिशोचीरन्तरस्याꣳ शुक्रज्योतिर्विभाहि ॥१६॥ १६
अन्तरग्ने रुचा त्वमुखायाः सदने स्वे । तस्यास्त्वꣳ हरसा तपञ्जातवेदः शिवो भव ॥१७॥ १७
शिवो भूत्वा मह्यमग्ने अथो सीद शिवस्त्वम् । शिवाः कृत्वा दिशः सर्वाः स्वं योनिमिहासदः १८(१)१८

दिवस्परि प्रथमं जज्ञे अग्निरस्मद् द्वितीयं परि जातवेदाः ।
तृतीयमप्सु नृमणा अजस्रमिन्धान एनं जरते स्वाधीः ॥१॥ १९
विद्मा ते अग्ने त्रेधा त्रयाणि विद्मा ते धाम विभृता पुरुत्रा ।
विद्मा ते नाम परमं गुहा यद्विद्मा तमुत्सं यत आजगन्थ ॥२॥ २०
समुद्रे त्वा नृमणा अप्स्वन्तर्नृचक्षा ईधे दिवो अग्न ऊधन् ।
तृतीये त्वा रजसि तस्थिवाꣳसमपामुपस्थे महिषा अवर्धन् ॥३॥ २१
अक्रन्ददग्निः स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् ।
सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः ॥४॥ २२
श्रीणामुदारो धरुणो रयीणां मनीषाणां प्रार्पणः सोमगोपाः ।
वसुः सूनुः सहसो अप्सु राजा विभात्यग्र उषसामिधानः ॥५॥ २३
विश्वस्य केतुर्भुवनस्य गर्भ आ रोदसी अपृणाज्जायमानः ।
वीडुं चिदद्रिमभिनत् परायञ्जना यदग्निमयजन्त पञ्च ॥६॥ २४
उशिक्पावको अरतिः सुमेधा मर्तेष्वग्निरमृतो निधायि ।
इयर्ति धूममरुषं भरिभ्रदुच्छुक्रेण शोचिषा द्यामिनक्षन् ॥७॥ २५ [१५८]

दृशानो रुक्म उर्व्या व्यद्यौद्दुर्मर्षमायुः श्रिये रुचानः ।
अग्निरमृतो अभवद्वयोभिर्यदेनं द्यौरजनयत्सुरेताः ॥८॥ २६
यस्ते अद्य कृणवद्भद्रशोचेऽपूपं देव घृतवन्तमग्ने ।
प्र तं नय प्रतरं वस्यो अच्छाभि सुम्नं देवभक्तं यविष्ठ ॥९॥ २७
आ तं भज सौश्रवसेष्वग्न उक्थ उक्थ आभज शस्यमाने ।
प्रियः सूर्ये प्रियो अग्ना भवात्युज्जातेन भिनददुज्जनित्वैः ॥१०॥ २८
त्वामग्ने यजमाना अनु द्यून् विश्वा वसु दधिरे वार्याणि ।
त्वया सह द्रविणमिच्छमाना व्रजं गोमन्तमुशिजो विवव्रुः ॥११॥ २९
अस्ताव्यग्निर्नराꣳ सुशेवो वैश्वानर ऋषिभिः सोमगोपाः ।
अद्वेषे द्यावापृथिवी हुवेम देवा धत्त रयिमस्मे सुवीरम् ॥१२॥ (२) ३०

समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम् । आस्मिन् हव्या जुहोतन ॥१॥ ३१
उदु त्वा विश्वे देवा अग्ने भरन्तु चित्तिभिः । स नो भव शिवस्त्वꣳ सुप्रतीको विभावसुः ॥२॥ ३२
प्रेदग्ने ज्योतिष्मान् याहि शिवेभिरर्चिभिष्ट्वम् । बृहद्भिर्भानुभिर्भासन्मा हिꣳसीस्तन्वा प्रजाः ॥३॥ ३३
अक्रन्ददग्निः स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् ।
सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः ॥४॥ ३४
प्र प्रायमग्निर्भरतस्य शृण्वे वि यत्सूर्यो न रोचते बृहद्भाः ।
अभि यः पूरुं पृतनासु तस्थौ दीदाय दैव्यो अतिथिः शिवो नः ॥५॥ ३५
आपो देवीः प्रतिगृभ्णीत भस्मैतत्स्योने कृणुध्वꣳ सुरभा उ लोके ।
तस्मै नमन्तां जनयः सुपत्नीर्मातेव पुत्रं बिभृताप्स्वेनत् ॥६॥ ३६
अप्स्वग्ने सधिष्टव सौषधीरनु रुध्यसे । गर्भे सञ्जायसे पुनः ॥७॥ ३७
गर्भो अस्योषधीनां गर्भो वनस्पतीनाम् । गर्भो विश्वस्य भूतस्याग्ने गर्भो अपामसि ॥८॥ ३८
प्रसद्य भस्मना योनिमपश्च पृथिवीमग्ने । सꣳसृज्य मातृभिष्ट्वं ज्योतिष्मान् पुनरासदः ॥९॥ ३९
पुनरासद्य सदनमपश्च पृथिवीमग्ने । शेषे मातुर्यथोपस्थेऽन्तरस्याꣳ शिवतमः ॥१०॥ ४०
पुनरूर्जा निवर्तस्व पुनरग्न इषायुषा । पुनर्नः पाह्यꣳहसः ॥११॥ ४१
सह रय्या निवर्तस्वाग्ने पिन्वस्व धारया । विश्वप्स्न्या विश्वतस्परि ॥१२॥ ४२
बोधा मे अस्य वचसो यविष्ठ मꣳहिष्ठस्य प्रभृतस्य स्वधावः ।
पीयति त्वो अनु त्वो गृणाति वन्दारुष्टे तन्वं वन्दे अग्ने ॥१३॥ ४३ [६७३]

स बोधि सूरिर्मघवा वसुपते वसुदावन् । युयोध्यस्मद्द्वेषाᳩसि विश्वकर्मणे स्वाहा ॥१४॥ ४४
पुनस्त्वादित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्माणो वसुनीथ यज्ञैः ।
घृतेन त्वं तन्वं वर्धयस्व सत्याः सन्तु यजमानस्य कामाः स्वाहा ॥१५॥ (३) ४५

अपेत वीत वि च सर्पतातो येऽत्र स्थ पुराणा ये च नूतनाः ।
अदाद्यमोऽवसानं पृथिव्या अक्रन्निमं पितरो लोकमस्मै ॥१॥ ४६
संज्ञानमसि कामधरणं मयि ते कामधरणं भूयात् । अग्नेर्भस्मास्यग्नेः पुरीषमसि ।
चित स्थ परिचित ऊर्ध्वचितः श्रयध्वम् ॥२॥ ४७
अयᳩ सो अग्निर्यस्मिन्त्सोममिन्द्रः सुतं दधे जठरे वावशानः ।
सहस्रियं वाजमत्यं न सप्तिᳩ ससवान्त्सन्त्स्तूयसे जातवेदः ॥३॥ ४८
अग्ने यत्ते दिवि वर्चः पृथिव्यां यदोषधीष्वप्स्वा यजत्र ।
येनान्तरिक्षमुर्वाततन्थ त्वेषः स भानुरर्णवो नृचक्षाः ॥४॥ ४९
अग्ने दिवो अर्णमच्छा जिगास्यच्छा देवाँ२ ऊचिषे धिष्ण्या ये ।
या रोचने परस्तात् सूर्यस्य याश्चावस्तादुपतिष्ठन्त आपः ॥५॥ ५०
पुरीष्यासो अग्नयः प्रावणेभिः सजोषसः । जुषन्तां यज्ञमद्रुहोऽनमीवा इषो महीः ॥६॥ ५१
इडामग्ने पुरुदᳩसᳩ सनिं गोः शश्वत्तमᳩ हवमानाय साध ।
स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥७॥ ५२
अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः । तं जानन्नग्न आरोहाथा नो वर्धया रयिम् ॥८॥ ५३
चिदसि तया देवतयाङ्गिरस्वद् ध्रुवा सीद । परिचिदसि तया देवतयाङ्गिरस्वद् ध्रुवा सीद ॥९॥ ५४
लोकं पृण छिद्रं पृणाथो सीद ध्रुवा त्वम् । इन्द्राग्नी त्वा बृहस्पतिरस्मिन् योनावसीषदन् ॥१०॥ ५५
ता अस्य सूददोहसः सोमᳩ श्रीणन्ति पृश्नयः । जन्मन्देवानां विशस्त्रिष्वा रोचने दिवः ॥११॥ ५६
इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः । रथीतमᳩ रथीनां वाजानाᳩ सत्पतिं पतिम् ॥१२॥ ५७
समितᳩ सङ्कल्पेथाᳩ संप्रियौ रोचिष्णू सुमनस्यमानौ । इषमूर्जमभि संवसानौ ॥१३॥ ५८
सं वां मनाᳩसि सं व्रता समु चित्तान्याकरम् ।
अग्ने पुरीष्याधिपा भव त्वं न इषमूर्जं यजमानाय धेहि ॥१४॥ ५९
अग्ने त्वं पुरीष्यो रयिमान् पुष्टिमाँ२ असि । शिवाः कृत्वा दिशः सर्वाः स्वं योनिमिहासदः ॥१५॥ ६०
भवतं नः समनसौ सचेतसावरेपसौ ।
मा यज्ञᳩ हिᳩसिष्टं मा यज्ञपतिं जातवेदसौ शिवौ भवतमद्य नः ॥१६॥ ६१ [६१०]

मातेवं पुत्रं पृथिवी पुरीष्यमग्निं स्वे योनां अभारुखा ।
तां विश्वैर्देवैर्ऋतुभिः संविदानः प्रजापतिर्विश्वकर्मा विमुञ्चतु ॥१७॥(४) ६२

असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यामन्विहि तस्करस्य ।
अन्यमस्मदिच्छ सा तं इत्या नमों देवि निर्ऋते तुभ्यमस्तु ॥१॥ ६३
नमः सु तें निर्ऋते तिग्मतेजोऽयस्मयं विचृता बन्धमेतम् ।
यमेन त्वं यम्या संविदानोत्तमे नाके अधिरोहयैनम् ॥२॥ ६४
यस्यास्ते घोर आसञ्जुहोम्येषां बन्धानामवसर्जनाय ।
यां त्वा जनो भूमिरिति प्रमन्दते निर्ऋतिं त्वाहं परिवेद विश्वतः ॥३॥ ६५
यं तें देवी निर्ऋतिराबबन्ध पाशं ग्रीवास्वविचृत्यम् ।
तं ते विष्याम्यायुषो न मध्यादथैतं पितुमद्धि प्रसूतः । नमो भूत्यै येदं चकार ॥४॥ ६६
निवेशनः सङ्गमनो वसूनां विश्वा रूपाभिचष्टे शचीभिः ।
देव इव सविता सत्यधर्मेन्द्रो न तस्थौ समरे पथीनाम् ॥५॥ ६७
सीरा युञ्जन्ति कवयो युगा वितन्वते पृथक् । धीरा देवेषु सुम्नया ॥६॥ ६८
युनक्त सीरा वि युगा तनुध्वं कृते योनौ वपतेह बीजम् ।
गिरा च श्रुष्टिः सभरा असन्नो नेदीय इत्सृण्यः पक्वमेयात् ॥७॥ ६९
शुनं सु फाला विकृषन्तु भूमिं शुनं कीनाशा अभियन्तु वाहैः ।
शुनासीरा हविषा तोशमाना सुपिप्पला ओषधीः कर्तमस्मे ॥८॥ ७०
घृतेन सीता मधुना समज्यतां विश्वैर्देवैरनुमता मरुद्भिः ।
ऊर्जस्वती पयसा पिन्वमानास्मान्त्सीते पयसाभ्याववृत्स्व ॥९॥ ७१
लाङ्गलं पवीरवत्सुशेवं सोमपित्सरु ।
तदुद्वपति गामविं प्रफर्व्यं च पीवरीं प्रस्थावद्रथवाहणम् ॥१०॥ ७२
कामं कामदुघे धुक्ष्व मित्राय वरुणाय च । इन्द्रायाश्विभ्यां पूष्णे प्रजाभ्य ओषधीभ्यः ॥११॥ ७३
विमुच्यध्वमघ्न्या देवयाना अगन्म तमसस्पारमस्य । ज्योतिरापाम ॥१२॥ ७४
सजूरब्दो अयवोभिः सजूरुषा अरुणीभिः ।
सजोषसा अश्विना दंसोभिः सजूः सूर एतशेन सजूर्वैश्वानर इळया घृतेन स्वाहा ॥१३॥(५) ७५

या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा । मनै नु बभ्रूणामहं शतं धामानि सप्त च ॥१॥ ७६
शतं वो अम्ब धामानि सहस्रमुत वो रुहः । अधा शतक्रत्वो यूयमिमं मे अगदं कृता ॥२॥ ७७

ओषधीः प्रति गृभ्णीत पुष्पवतीः प्रसूवरीः । अश्वा इव सजित्वरीर्वीरुधः पारयिष्ण्वः ॥३॥ ७८
ओषधीरिति मातरस्तद्वो देवीरुपब्रुवे । सनेयमश्वं गां वास आत्मानं तव पूरुष ॥४॥ ७९
अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता । गोभाज इत्किलासथ यत्सनवथ पूरुषम् ॥५॥ ८०
यत्रौषधीः समग्मत राजानः समिता इव । विप्रः स उच्यते भिषग्रक्षोहामीवचातनः ॥६॥ ८१
अश्वावतीꣳ सोमावतीमूर्जयन्तीमुदोजसम् । आवित्सि सर्वा ओषधीरस्मा अरिष्टतातये ॥७॥ ८२
उच्छुष्मा ओषधीनां गावो गोष्ठादिवेरते । धनꣳ सनिष्यन्तीनामात्मानं तव पूरुष ॥८॥ ८३

इष्कृतिर्नाम वो माताथो यूयꣳ स्थ निष्कृतीः ।
सीराः पतत्रिणीं स्थन यदामयति निष्कृथ ॥९॥ ८४

अति विश्वाः परिष्ठा स्तेन इव व्रजमक्रमुः । ओषधीः प्राचुच्यवुर्यत्किं च तन्वो रपः ॥१०॥ ८५
यदिमा वाजयन्नहमोषधीर्हस्त आदधे । आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा ॥११॥ ८६
यस्यौषधीः प्रसर्पथाङ्गमङ्गं परुष्परुः । ततो यक्ष्मं विबाधध्व उग्रो मध्यमशीरिव ॥१२॥ ८७
साकं यक्ष्म प्रपत चाषेण किकिदीविना । साकं वातस्य ध्राज्या साकं नश्य निहाकया ॥१३॥ ८८
अन्या वो अन्यामवत्वन्यान्यस्या उपावत । ताः सर्वाः संविदाना इदं मे प्रावता वचः ॥१४॥ ८९

याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः ।
बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वꣳहसः ॥१५॥ ९०

मुञ्चन्तु मा शपथ्यादथो वरुण्यादुत । अथो यमस्य पड्वीशात्सर्वस्माद्देवकिल्बिषात् ॥१६॥ ९१
अवयतीः समवदन्त दिव ओषधयस्परि । यं जीवमश्नवामहै न स रिष्याति पूरुषः ॥१७॥ ९२
या ओषधीः सोमराज्ञीर्बह्वीः शतविचक्षणाः । तासामसि त्वमुत्तमारं कामाय शꣳ हृदे ॥१८॥ ९३
या ओषधीः सोमराज्ञीर्विष्ठिताः पृथिवीमनु । बृहस्पतिप्रसूता अस्यै संदत्त वीर्यम् ॥१९॥ ९४
याश्चेदमुपशृण्वन्ति याश्च दूरं परागताः । सर्वाः संगत्य वीरुधोऽस्यै संदत्त वीर्यम् ॥२०॥ ९५
नाशयित्री बलासस्यार्शस उपचितामसि । अथो शतस्य यक्ष्माणां पाकारोरसि नाशनी ॥२१॥ ९६
मा वो रिषत् खनिता यस्मै चाहं खनामि वः । द्विपच्चतुष्पदस्माकꣳ सर्वमस्त्वनातुरम् ॥२२॥ ९७
ओषधयः संवदन्ते सोमेन सह राज्ञा । यस्मै कृणोति ब्राह्मणस्तꣳ राजन् पारयामसि ॥२३॥ ९८

त्वां गन्धर्वा अखनꣳस्त्वामिन्द्रस्त्वां बृहस्पतिः ।
त्वामोषधे सोमो राजा विद्वान् यक्ष्मादमुच्यत ॥२४॥ ९९

त्वमुत्तमास्योषधे तव वृक्षा उपस्तयः ।
उपस्तिरस्तु सोऽस्माकं यो अस्माँ२ अभिदासति ॥२५॥ (६) १०० [७३३]

मा मा हिꣳसीज्जनिता यः पृथिव्या यो वा दिवꣳ सत्यधर्मा व्यानट् ।
यश्चापश्चन्द्राः प्रथमो जजान कस्मै देवाय हविषा विधेम ॥१॥ १०१
अभ्यावर्तस्व पृथिवि यज्ञेन पयसा सह । वपां ते अग्निरिषितो अरोहत् ॥२॥ १०२
अग्ने यत्ते शुक्रं यच्चन्द्रं यत्पूतं यच्च यज्ञियम् । तद्देवेभ्यो भरामसि ॥३॥ १०३
इषमूर्जमहमित आदमृतस्य योनिं महिषस्य धाराम् ।
आ मा गोषु विशत्वा तनूषु जहामि सेदिमनिराममीवाम् ॥४॥ १०४
अग्ने तव श्रवो वयो महि भ्राजन्ते अर्चयो विभावसो ।
बृहद्भानो शवसा वाजमुक्थ्यं दधासि दाशुषे कवे ॥५॥ १०५
पावकवर्चाः शुक्रवर्चा अनूनवर्चा उदियर्षि भानुना ।
पुत्रो मातरा विचरन्नुपावसि पृणक्षि रोदसी उभे ॥६॥ १०६
ऊर्जो नपाज्जातवेदः सुशस्तिभिर्मन्दस्व धीतिभिर्हितः ।
त्वे इषः सन्दधुर्भूरिवर्पसश्चित्रोतयो वामजाताः ॥७॥ १०७
इरज्यन्नग्ने प्रथयस्व जन्तुभिरस्मे रायो अमर्त्य ।
स दर्शतस्य वपुषो विराजसि पृणक्षि सानसिं क्रतुम् ॥८॥ १०८
इष्कर्तारमध्वरस्य प्रचेतसं क्षयन्तꣳ राधसो महः ।
रातिं वामस्य सुभगां महीमिषं दधासि सानसिꣳ रयिम् ॥९॥ १०९
ऋतावानं महिषं विश्वदर्शतमग्निꣳ सुम्नाय दधिरे पुरो जनाः ॥
श्रुत्कर्णꣳ सप्रथस्तमं त्वा गिरा दैव्यं मानुषा युगा ॥१०॥ ११०
आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवा वाजस्य सङ्गथे ॥११॥ १११
सं ते पयाꣳसि समु यन्तु वाजाः सं वृष्ण्यान्यभिमातिषाहः ।
आप्यायमानो अमृताय सोम दिवि श्रवाꣳस्युत्तमानि धिष्व ॥१२॥ ११२
आप्यायस्व मदिन्तम सोम विश्वेभिरꣳशुभिः । भवा नः सप्रथस्तमः सखा वृधे ॥१३॥ ११३
आ ते वत्सो मनो यमत्परमाच्चित्सधस्थात् । अग्ने त्वां कामया गिरा ॥१४॥ ११४
तुभ्यं ता अङ्गिरस्तम विश्वाः सुक्षितयः पृथक् । अग्ने कामाय येमिरे ॥१५॥ ११५
अग्निः प्रियेषु धामसु कामो भूतस्य भव्यस्य । सम्राळेको विराजति ॥१६॥(७) ११६ [७४९]

ईशानोऽष्टादश ॥१८॥ दिवस्परि द्वादश ॥१२॥ समिधाग्निं दुव० पञ्चदश ॥१५॥ अपेत सप्तदश ॥ १७ ॥
मधुमन्तं त्रयोदश ॥ १३ ॥ या ओषधीः पञ्चविंशतिः ॥ २५ ॥ मा मा षोळश ॥ १६ ॥
सप्तानुवाकेषु षोळशोत्तरं शतम् ॥ ११६ ॥ इति शुक्लयजुःकाण्वसंहितायां त्रयोदशोऽध्यायः ॥१३॥

## अथ चतुर्दशोऽध्यायः ।

मयि गृह्णाम्यग्रे अग्निꣳ रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय। मामु देवताः सचन्ताम्॥१॥१
अपां पृष्ठमसि योनिरग्नेः समुद्रमभितः पिन्वमानम् ।
वर्धमानो महाँ२ आ च पुष्करे दिवो मात्रया वरिम्णा प्रथस्व ॥२॥ २
ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः
स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥३॥ ३
हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥४॥ ४
द्रप्सश्चस्कन्द पृथिवीमनु द्यामिमं च योनिमनु यश्च पूर्वः ।
समानं योनिमनु सञ्चरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः ॥५॥ ५
नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु । ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः ॥६॥ ६
या इषवो यातुधानानां ये वा वनस्पतीꣳरनु । ये वावटेषु शेरते तेभ्यः सर्पेभ्यो नमः ॥७॥ ७
ये वामी रोचने दिवो ये वा सूर्यस्य रश्मिषु । येषामप्सु सदस्कृतं तेभ्यः सर्पेभ्यो नमः ॥८॥ ८
कृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजेवामवाँ२ इभेन ।
तृष्वीमनु प्रसितिं द्रूणानोऽस्तासि विध्य रक्षसस्तपिष्ठैः ॥९॥ ९
तव भ्रमास आशुया पतन्त्यनुस्पृश धृषता शोशुचानः ।
तपूꣳष्यग्ने जुह्वा पतङ्गानसन्दितो विसृज विष्वगुल्काः ॥१०॥ १०
प्रति स्पशो विसृज तूर्णितमो भवा पायुर्विशो अस्या अदब्धः ।
यो नो दूरे अघशꣳसो यो अन्त्यग्ने मा किष्टे व्यथिरादधर्षीत् ॥११॥ ११
उदग्ने तिष्ठ प्रत्यातनुष्व न्यमित्राँ२ ओषतात्तिग्महेते ।
यो नो अरातिꣳ समिधान चक्रे नीचा तं धक्ष्यतसं न शुष्कम् ॥१२॥ १२
ऊर्ध्वो भव प्रतिविध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने ।
अव स्थिरा तनुहि यातुजूनां जामिमजामिं प्रमृणीहि शत्रून् ॥१३॥ १३
अग्नेष्ट्वा तेजसा सादयामि । अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् ।
अपाꣳ रेताꣳसि जिन्वति । इन्द्रस्य त्वौजसा सादयामि ॥१४॥ १४
भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचसे शिवाभिः ।
दिवि मूर्धानं दधिषे स्वर्षां जिह्वामग्ने चकृषे हव्यवाहम् ॥१५॥ (१) १५ [illegible]

ध्रुवासि धरुणास्तृता विश्वकर्मणा ।
मा त्वा समुद्र उद्वधीन्मा सुपर्णोऽव्यथमाना पृथिवीं दृꣳह ॥१॥ १६
प्रजापतिष्ट्वा सादयत्वपां पृष्ठे समुद्रस्येमन् । व्यचस्वतीं प्रथस्वतीं प्रथस्व पृथिव्यसि ॥२॥ १७
भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री ।
पृथिवीं यच्छ पृथिवीं दृꣳह पृथिवीं मा हिꣳसीः ॥३॥ १८
विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय ।
अग्निष्ट्वाभिपातु मह्या स्वस्त्या छर्दिषा शन्तमेन तया देवतयाङ्गिरस्वद् ध्रुवा सीद ॥४॥ १९
काण्डात्काण्डात्प्ररोहन्ती परुषः-परुषस्परि । एवा नो दूर्वे प्रतनु सहस्रेण शतेन च॥५॥२०
या शतेन प्रतनोषि सहस्रेण विरोहसि । तस्यास्ते देवीष्टके विधेम हविषा वयम् ॥६॥ २१
यास्ते अग्ने सूर्ये रुचो दिवमातन्वन्ति रश्मिभिः ।
ताभिर्नो अद्य सर्वाभी रुचे जनाय नस्कृधि ॥७॥ २२
या वो देवाः सूर्ये रुचो गोष्वश्वेषु या रुचः ।
इन्द्राग्नी ताभिः सर्वाभी रुचं नो धत्त बृहस्पते ॥८॥ २३
विराड्ज्योतिरधारयत्स्वराड्ज्योतिरधारयत् ।
प्रजापतिष्ट्वा सादयतु पृष्ठे पृथिव्या ज्योतिष्मतीम् ॥९॥ २४
विश्वस्मै प्राणायापानाय व्यानाय विश्वं ज्योतिर्यच्छ ।
अग्निष्टेऽधिपतिस्तया देवतयाङ्गिरस्वद् ध्रुवा सीद ॥१०॥ २५
मधुश्च माधवश्च वासन्तिका ऋतू अग्नेरन्तःश्लेषोऽसि ।
कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः कल्पन्तामग्नयः पृथङ् मम ज्यैष्ठ्याय सव्रताः।
ये अग्नयः समनसोऽन्तरा द्यावापृथिवी इमे ।
वासन्तिका ऋतू अभिकल्पमाना इन्द्रमिव
देवा अभिसंविशन्तु तया देवतयाङ्गिरस्वद् ध्रुवे सीदतम् ॥११॥ २६
अषाळ्हासि सहमाना सहस्वारातीः सहस्व पृतनायतः । सहस्रवीर्यासि सा मा जिन्व ॥१२॥ २७
सहस्वेमा अभिमातीः सहस्व पृतनायतः । सहस्व सर्वं पाप्मानꣳ सहमानास्योषधे ॥१३॥ (२) २८

मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः ॥१॥ २९
मधु नक्तमुतोषसो मधुमत्पार्थिवꣳ रजः । मधु द्यौरस्तु नः पिता ॥२॥ ३०
मधुमान्नो वनस्पतिर्मधुमाँ२ अस्तु सूर्यः । माध्वीर्गावो भवन्तु नः ॥३॥ ३१ [७८०]

अपां गर्भन्त्सीद मा त्वा सूर्योऽभिताप्सीन्माग्निर्वैश्वानरः ।
अच्छिन्नपत्राः प्रजा अनुवीक्षस्वानु त्वा दिव्या वृष्टिः सचताम् ॥४॥ ३२
त्रीन्त्समुद्रान्त्समसृपत् स्वर्गानपां पतिर्वृषभ इष्टकानाम् ।
पुरीषं वसानः सुकृतस्य लोके तत्र गच्छ यत्र पूर्वे परेताः ॥५॥ ३३
मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् । पिपृतां नो भरीमभिः ॥६॥ ३४
विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखा ॥७॥ ३५
ध्रुवासि धरुणेतो जज्ञे प्रथममेभ्यो योनिभ्यो अधि जातवेदाः ।
स गायत्र्या त्रिष्टुभानुष्टुभा च देवेभ्यो हव्यं वहतु प्रजानन् ॥८॥ ३६
इषे राये रमस्व सहसे द्युम्न ऊर्जे अपत्याय ।
सम्राळसि स्वराळसि सारस्वतौ त्वोत्सौ प्रावताम् ॥९॥ ३७
अग्ने युक्ष्वा हि ये तवाश्वासो देव साधवः । अरं वहन्ति मन्यवे ॥१०॥ ३८
युक्ष्वा हि देवहूतमाँ२ अश्वाँ२ अग्ने रथीरिव । नि होता पूर्व्यः सदः ॥११॥ (३) ३९

सम्यक् स्रवन्ति सरितो न धेना अन्तर्हृदा मनसा पूयमानाः ।
घृतस्य धारा अभिचाकशीमि हिरण्ययो वेतसो मध्ये अग्नेः ॥१॥ ४०
ऋचे त्वा रुचे त्वा भासे त्वा ज्योतिषे त्वा ।
अभूदिदं विश्वस्य भुवनस्य वाजिनमग्नेर्वैश्वानरस्य च ॥२॥ ४१
अग्निर्ज्योतिषा ज्योतिष्मान् रुक्मो वर्चसा वर्चस्वान् । सहस्रदा असि सहस्राय त्वा ॥३॥ ४२
आदित्यं गर्भं पयसा समङ्धि सहस्रस्य प्रतिमां विश्वरूपम् ।
परिवृङ्धि हरसा माभिमंस्थाः शतायुषं कृणुहि चीयमानः ॥४॥ ४३
वातस्य जूतिं वरुणस्य नाभिमश्वं जज्ञानꣳ सरिरस्य मध्ये ।
शिशुं नदीनाꣳ हरिमद्रिबुध्नमग्ने मा हिꣳसीः परमे व्योमन् ॥५॥ ४४
अजस्रमिन्दुमरुषं भुरण्युमग्निमीळे पूर्वचित्तिं नमोभिः ।
स पर्वभिर्ऋतुशः कल्पमानो गां मा हिꣳसीरदितिं विराजम् ॥६॥ ४५
वरूत्रीं त्वष्टुर्वरुणस्य नाभिमविं जज्ञानाꣳ रजसः परस्मात् ।
महीꣳ साहस्रीमसुरस्य मायामग्ने मा हिꣳसीः परमे व्योमन् ॥७॥ ४६
यो अग्निरग्नेरध्यजायत शोकात्पृथिव्या उत वा दिवस्परि ।
येन प्रजा विश्वकर्मा जजान तमग्ने हेळः परि ते वृणक्तु ॥८॥ ४७ [७१६]

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आप्रा द्यावापृथिवी अन्तरिक्षꣳ सूर्य आत्मा जगतस्तस्थुषश्च ॥९॥ (४) ४८

इमं मा हिꣳसीर्द्विपादं पशुꣳ सहस्राक्षो मेधाय चीयमानः ।
मयुं पशुं मेधमग्ने जुषस्व तेन चिन्वानस्तन्वो निषीद ।
मयुं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छतु ॥१॥ ४९

इमं मा हिꣳसीरेकशफं पशुं कनिक्रदं वाजिनं वाजिनेषु ।
गौरमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो निषीद ।
गौरं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छतु ॥२॥ ५०

इमꣳ साहस्रꣳ शतधारमुत्सं व्यच्यमानꣳ सरिरस्य मध्ये ।
घृतं दुहानामदितिं जनायाग्ने मा हिꣳसीः परमे व्योमन् ।
गवयमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो निषीद ।
गवयं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छतु ॥३॥ ५१

इममूर्णायुं वरुणस्य नाभिं त्वचं पशूनां द्विपदां चतुष्पदाम् ।
त्वष्टुः प्रजानां प्रथमं जनित्रमग्ने मा हिꣳसीः परमे व्योमन् ।
उष्ट्रमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो निषीद ।
उष्ट्रं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छतु ॥४॥ ५२

अजो ह्यग्नेरजनिष्ट शोकात्सो अपश्यज्जनितारमग्रे ।
तेन देवा देवतामग्रमायꣳस्तेन रोहमायन्नुप मेध्यासः ।
शरभमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो निषीद ।
शरभं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छतु ॥५॥ ५३

त्वं यविष्ठ दाशुषो नॄꣳ पाहि शृणुधी गिरः । रक्षा तोकमुत त्मना ॥६॥(५) ५४ [८०३]

अपां त्वेमन्त्सादयाम्यपां त्वोद्मन्त्सादयाम्यपां त्वा भस्मन्त्सादयामि ।
अपां त्वा ज्योतिषि सादयाम्यपां त्वायने सादयामि ।
अर्णवे त्वा सदने सादयामि समुद्रे त्वा सदने सादयामि सरिरे त्वा सदने सादयामि ।
अपां त्वा क्षये सादयाम्यपां त्वा सधिषि सादयामि ।
अपां त्वा सदने सादयाम्यपां त्वा सधस्थे सादयाम्यपां त्वा योनौ सादयामि ।

अपां त्वा पुरीषे सादयाम्यपां त्वा पार्थसि सादयामि ।
गायत्रेण त्वा छन्दसा सादयामि त्रैष्टुभेन त्वा छन्दसा सादयामि जागतेन त्वा छन्दसा सादयामि ।
आनुष्टुभेन त्वा छन्दसा सादयामि पाङ्क्तेन त्वा छन्दसा सादयामि ॥१॥ (६) ५५
अयं पुरो भुवस्तस्य प्राणो भौवायनो वसन्तः प्राणायनः । गायत्री वासन्ती ॥१॥ ५६
गायत्र्यै गायत्रं गायत्रादुपा२ंशुरुपा२ंशोस्त्रिवृत् त्रिवृतो रथन्तरम् ।
वसिष्ठ ऋषिः प्रजापतिगृहीतया त्वया प्राणं गृह्णामि प्रजाभ्यः ॥२॥ ५७
अयं दक्षिणा विश्वकर्मा तस्य मनो वैश्वकर्मणम् । ग्रीष्मो मानसस्त्रिष्टुब्ग्रैष्मी ॥३॥ ५८
त्रिष्टुभः स्वार२ं स्वारादन्तर्यामोऽन्तर्यामात्पञ्चदशः पञ्चदशाद् बृहत् ।
भरद्वाज ऋषिः प्रजापतिगृहीतया त्वया मनो गृह्णामि प्रजाभ्यः ॥४॥ ५९
अयं पश्चाद्विश्वव्यचास्तस्य चक्षुर्वैश्वव्यचसम् । वर्षाश्चाक्षुष्यो जगती वार्षी ॥५॥ ६०
जगत्या ऋक्समम्रृक्समाच्छुक्रः शुक्रात्सप्तदशः सप्तदशाद्वैरूपम् ।
जमदग्निर्ऋषिः प्रजापतिगृहीतया त्वया चक्षुर्गृह्णामि प्रजाभ्यः ॥६॥ ६१
इदमुत्तरात् स्वस्तस्य श्रोत्र२ं सौवम् । शरच्छ्रौत्र्यनुष्टुप्शारदी ॥७॥ ६२
अनुष्टुभ ऐलमैलान्मन्थी मन्थिन एकविꣳश एकविꣳशाद्वैराजम् ।
विश्वामित्र ऋषिः प्रजापतिगृहीतया त्वया श्रोत्रं गृह्णामि प्रजाभ्यः ॥८॥ ६३
इयमुपरि मतिस्तस्यै वाङ्मात्या । हेमन्तो वाच्यः पङ्क्तिर्हैमन्ती ॥९॥ ६४
पङ्क्त्यै निधनवन्निधनवत आग्रयण आग्रयणात् त्रिणवत्रयस्त्रि२ंशौ त्रिणवत्रयस्त्रि२ंशाभ्या२ं शाक्वररैवते ।
विश्वकर्म ऋषिः प्रजापतिगृहीतया त्वया वाचं गृह्णामि प्रजाभ्यः ।
लोकं पृण ता अस्येन्द्रं विश्वाः ॥१०॥ (७) ६५ [८१४]

मयि गृह्णामि पञ्चदश ॥१५॥ ध्रुवासि त्रयोदश ॥१३॥ मधुवाता एकादश ॥११॥ सम्यक्स्रवन्ति नव ॥९॥ इमं मा षद् ॥६॥ अपान्त्वेकां ॥१॥ अयं पुरो दश ॥१०॥ सप्तानुवाकेषु पञ्चषष्टिः ॥ ६५ ॥

॥ इति शुक्लयजुःकाण्वसंहितायां चतुर्दशोऽध्यायः ॥ १४ ॥

---

## अथ पञ्चदशोऽध्यायः ।

ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवासि ध्रुवं योनिमासीद साधुया ।
उख्यस्य केतुं प्रथमं जुषाणाश्विनाध्वर्यू सादयतामिह त्वा ॥१॥ १
कुलायिनी घृतवती पुरंधिः स्योने सीद सदने पृथिव्याः ।
अभि त्वा रुद्रा वसवो गृणन्त्विमा ब्रह्म पीपिहि सौभगायाश्विनाध्वर्यू सादयतामिह त्वा ॥२॥ २[८१६]

स्वैर्दक्षैर्दक्षपितेह सीद देवानां सुम्ने बृहते रणाय।
पितेवैधि सूनव आ सुशेवा स्वावेशा तन्वा संविशस्वाश्विनाध्वर्यू सादयतामिह त्वा॥३॥ ३
पृथिव्याः पुरीषमस्यप्सो नाम तां त्वा विश्वे अभिगृणन्तु देवाः।
स्तोमपृष्ठा घृतवतीह सीद प्रजावदस्मे द्रविणायजस्वाश्विनाध्वर्यू सादयतामिह त्वा ॥४॥ ४
अदित्यास्त्वा पृष्ठे सादयाम्यन्तरिक्षस्य धर्त्रीं विष्टम्भनीं दिशामधिपत्नीं भुवनानाम्।
ऊर्मिर्द्रप्सो अपामसि विश्वकर्मा त ऋषिरश्विनाध्वर्यू सादयतामिह त्वा।
शुक्रश्च शुचिश्च ग्रैष्मा ऋतू अग्नेरन्तः श्लेषोऽसि।
कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः कल्पन्तामग्नयः पृथङ् मम ज्यैष्ठ्याय सव्रताः।
ये अग्नयः समनसोऽन्तरा द्यावापृथिवी इमे।
ग्रैष्मा ऋतू अभिकल्पमाना इन्द्रमिव देवा अभिसंविशन्तु
तया देवतयाङ्गिरस्वद् ध्रुवे सीदतम् ॥५॥(१) ५

सजूर्ऋतुभिः सजूर्विधाभिः सजूर्देवैः सजूर्देवैर्वयोनाधैः।
अग्नये त्वा वैश्वानरायाश्विनाध्वर्यू सादयतामिह त्वा।
सजूर्ऋतुभिः सजूर्विधाभिः सजूर्वसुभिः सजूर्देवैर्वयोनाधैः।
अग्नये त्वा वैश्वानरायाश्विनाध्वर्यू सादयतामिह त्वा।
सजूर्ऋतुभिः सजूर्विधाभिः सजू रुद्रैः सजूर्देवैर्वयोनाधैः।
अग्नये त्वा वैश्वानरायाश्विनाध्वर्यू सादयतामिह त्वा।
सजूर्ऋतुभिः सजूर्विधाभिः सजूरादित्यैः सजूर्देवैर्वयोनाधैः।
अग्नये त्वा वैश्वानरायाश्विनाध्वर्यू सादयतामिह त्वा।
सजूर्ऋतुभिः सजूर्विधाभिः सजूर्विश्वैर्देवैः सजूर्देवैर्वयोनाधैः।
अग्नये त्वा वैश्वानरायाश्विनाध्वर्यू सादयतामिह त्वा ॥१॥ ६
प्राणं मे पाह्यपानं मे पाहि व्यानं मे पाहि। चक्षुर्म उर्व्या विभाहि श्रोत्रं मे श्लोकय॥२॥ ७
अपः पिन्वौषधीर्जिन्व द्विपादव चतुष्पात् पाहि। दिवो वृष्टिमेरय ॥३॥ (२) ८

मूर्धा वयः प्रजापतिश्छन्दः क्षत्रं वयो मयन्दं छन्दः।
विष्टम्भो वयोऽधिपतिश्छन्दो विश्वकर्मा वयः परमेष्ठी छन्दः ॥१॥ ९
बस्तो वयो विबलं छन्दो वृष्णिर्वयो विशालं छन्दः।
पुरुषो वयस्तन्द्रं छन्दो व्याघ्रो वयोऽनाधृष्टं छन्दः ॥२॥ १० [८२२]

सिꣳहो वयश्छदिश्छन्दः पष्ठवाड्वयो बृहती छन्दः ।
उक्षा वयः ककुप्छन्द ऋषभो वयः सतोबृहती छन्दः ॥३॥ ११
अनड्वान्वयः पङ्क्तिश्छन्दो धेनुर्वयो जगती छन्दः ।
त्र्यविर्वयस्त्रिष्टुप् छन्दो दित्यवाड्वयो विराट् छन्दः ॥४॥ १२
पञ्चाविर्वयो गायत्री छन्दस्त्रिवत्सो वय उष्णिक् छन्दः ।
तुर्यवाड्वयोऽनुष्टुप् छन्दो लोकं पृण ता अस्येन्द्रं विश्वाः ॥५॥(३) १३

इन्द्राग्नी अव्यथमानामिष्टकां दृꣳहतं युवम् । पृष्ठेन द्यावापृथिवी अन्तरिक्षं च विबाधसे ॥१॥ १४
विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे व्यचस्वतीं प्रथस्वतीम् ।
अन्तरिक्षं यच्छान्तरिक्षं दृꣳहान्तरिक्षं मा हिꣳसीः ।
विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय ।
वायुष्ट्वाभिपातु मह्या स्वस्त्या छर्दिषा शन्तमेन तया देवतयाङ्गिरस्वद् ध्रुवा सीद ॥२॥ १५
राज्ञ्यसि प्राची दिग्विराडसि दक्षिणा दिक् सम्राडसि प्रतीचीदिक्
स्वराडस्युदीची दिगधिपत्न्यसि बृहती दिक् ।
विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे ज्योतिष्मतीम् ।
विश्वस्मै प्राणायापानाय व्यानाय विश्वं ज्योतिर्यच्छ ।
वायुष्टेऽधिपतिस्तया देवतयाङ्गिरस्वद् ध्रुवा सीद ।
नभश्च नभस्यश्च वार्षिका ऋतू अग्नेरन्तः श्लेषोऽसि ।
कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः कल्पन्तामग्नयः पृथङ् मम ज्यैष्ठ्याय सव्रताः ।
ये अग्नयः समनसोऽन्तरा द्यावापृथिवी इमे ।
वार्षिका ऋतू अभिकल्पमाना इन्द्रमिव देवा अभिसंविशन्तु तया देवतयाङ्गिरस्वद् ध्रुवे सीदतम् ।
इषश्चोर्जश्च शारदा ऋतू अग्नेरन्तः श्लेषोऽसि ।
कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः कल्पन्तामग्नयः पृथङ् मम ज्यैष्ठ्याय सव्रताः ।
ये अग्नयः समनसोऽन्तरा द्यावापृथिवी इमे ।
शारदा ऋतू अभिकल्पमाना इन्द्रमिव देवा अभिसंविशन्तु
तया देवतयाङ्गिरस्वद् ध्रुवे सीदतम् ॥३॥(४) १६

आयुर्मे पाहि प्राणं मे पाह्यपानं मे पाहि व्यानं मे पाहि ।
चक्षुर्मे पाहि श्रोत्रं मे पाहि वाचं मे पिन्व मनो मे जिन्वात्मानं मे पाहि ज्योतिर्मे यच्छ ॥१॥ १७ [८३१]

मा छन्दः प्रमा छन्दः प्रतिमा छन्दो अस्रीवयश्छन्दः। पङ्क्तिश्छन्द उष्णिक् छन्दः ॥२॥ १८
बृहती छन्दोऽनुष्टुप् छन्दो विराट् छन्दो गायत्री छन्दः। त्रिष्टुप् छन्दो जगती छन्दः ॥३॥ १९
पृथिवी छन्दोऽन्तरिक्षं छन्दो द्यौश्छन्दः समाश्छन्दः।
नक्षत्राणि छन्दो वाक् छन्दः ॥४॥ २०
मनश्छन्दः कृषिश्छन्दो हिरण्यं छन्दो गौश्छन्दः। अजाछन्दोऽश्वश्छन्दः ॥५॥ २१
अग्निर्देवता वातो देवता सूर्यो देवता चन्द्रमा देवता। वसवो देवता रुद्रा देवता।
आदित्या देवता मरुतो देवता विश्वे देवा देवता बृहस्पतिर्देवता।
इन्द्रो देवता वरुणो देवता ॥६॥(५) २२

मूर्धासि राड् ध्रुवासि धरुणा धर्त्र्यसि धरणी। आयुषे त्वा वर्चसे त्वा कृष्यै त्वा क्षेमाय त्वा॥१॥२३
यन्त्री राड् यन्त्र्यसि यमनी ध्रुवासि धरित्री। इषे त्वोर्जे त्वा रय्यै त्वा पोषाय त्वा।
लोकं पृण ता अस्येद्रं विश्वाः ॥२॥(६) २४

आशुस्त्रिवृद्भान्तः पञ्चदशो व्योमा सप्तदशो धरुण एकविꣳशः प्रतूर्तिरष्टादशः।
तपो नवदशोऽभीवर्तः सविꣳशो वर्चो द्वाविꣳशः सम्भरणस्त्रयोविꣳशो योनिश्चतुर्विꣳशः॥१॥ २५
गर्भाः पञ्चविꣳश ओजस्त्रिणवः क्रतुरेकत्रिꣳशः प्रतिष्ठा त्रयस्त्रिꣳशो ब्रध्नस्य विष्टपं चतुस्त्रिꣳशः।
नाकः षट्त्रिꣳशो विवर्तोऽष्टाचत्वारिꣳशो धर्त्रं चतुष्टोमः ॥२॥ (७) २६

अग्नेर्भागोऽसि दीक्षाया आधिपत्यं ब्रह्म स्पृतं त्रिवृत्स्तोमः।
इन्द्रस्य भागोसि विष्णोराधिपत्यं क्षत्रꣳ स्पृतं पञ्चदश स्तोमः ॥१॥ २७
नृचक्षसां भागोऽसि धातुराधिपत्यं जनित्रꣳ स्पृतꣳ सप्तदश स्तोमः।
मित्रस्य भागोऽसि वरुणस्याधिपत्यं दिवो वृष्टिर्वात स्पृत एकविꣳश स्तोमः ॥२॥ २८
वसूनां भागोऽसि रुद्राणामाधिपत्यं चतुष्पात् स्पृतं चतुर्विꣳश स्तोमः।
आदित्यानां भागोऽसि मरुतामाधिपत्यं गर्भा स्पृताः पञ्चविꣳश स्तोमः ॥३॥ २९
अदितेर्भागोऽसि पूष्ण आधिपत्यमोज स्पृतं त्रिणव स्तोमः।
देवस्य सवितुर्भागोऽसि बृहस्पतेराधिपत्यꣳ समीचीर्दिशः स्पृताश्चतुष्टोम स्तोमः॥४॥३० [८४४]
यवानां भागोऽस्ययवानामाधिपत्यं प्रजा स्पृताश्चतुश्चत्वारिꣳश स्तोमः।
ऋभूणां भागोऽसि विश्वेषां देवानामाधिपत्यं भूतꣳ स्पृतं त्रयस्त्रिꣳश स्तोमः।

सहश्च सहस्यश्च हैमन्तिका ऋतू अग्नेरन्तः श्लेषोऽसि ।
कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः कल्पन्तामग्नयः पृथङ् मम ज्यैष्ठ्याय सव्रताः।
ये अग्नयः समनसोऽन्तरा द्यावापृथिवी इमे ।
हैमन्तिका ऋतू अभिकल्पमाना इन्द्रमिव देवा अभिसंविशन्तु
तया देवतयाङ्गिरस्वद् ध्रुवे सीदतम् ॥५॥ (८) ३१

एकयास्तुवत प्रजा अधीयन्त प्रजापतिरधिपतिरासीत्तिसृभिरस्तुवत
ब्रह्मासृज्यत ब्रह्मणस्पतिरधिपतिरासीत् ।
पञ्चभिरस्तुवत भूतान्यसृज्यन्त भूतानां पतिरधिपतिरासीत्सप्तभिरस्तुवत
सप्त ऋषयोऽसृज्यन्त धाताधिपतिरासीत् ॥१॥ ३२
नवभिरस्तुवत पितरोऽसृज्यन्तादितिरधिपत्न्यासीदेकादशभिरस्तुवत
ऋतवोऽसृज्यन्तार्तवा अधिपतय आसन् ।
त्रयोदशभिरस्तुवत मासा असृज्यन्त संवत्सरोऽधिपतिरासीत्पञ्चदशभिरस्तुवत
क्षत्रमसृज्यतेन्द्रोऽधिपतिरासीत् ॥२॥ ३३
सप्तदशभिरस्तुवत ग्राम्याः पशवोऽसृज्यन्त बृहस्पतिरधिपतिरासीन्नवदशभिरस्तुवत
शूद्रार्यावसृज्येतामहोरात्रे अधिपत्नी आस्ताम् ।
एकविꣳशत्यास्तुवतैकशफाः पशवोऽसृज्यन्त वरुणोऽधिपतिरासीत्
त्रयोविꣳशत्यास्तुवत क्षुद्राः पशवोऽसृज्यन्त पूषाधिपतिरासीत् ॥३॥ ३४
पञ्चविꣳशत्यास्तुवतारण्याः पशवोऽसृज्यन्त वायुरधिपतिरासीत्सप्तविꣳशत्यास्तुवत
द्यावापृथिवी व्यैतां वसवो रुद्रा आदित्या अनुव्यायꣳस्त एवाधिपतय आसन् ।
नवविꣳशत्यास्तुवत वनस्पतयोऽसृज्यन्त सोमोऽधिपतिरासीदेकत्रिꣳशतास्तुवत
प्रजा असृज्यन्त यवाश्चायवाश्चाधिपतय आसन् ।
त्रयस्त्रिꣳशतास्तुवत भूतान्यशाम्यन्प्रजापतिः परमेष्ठ्यधिपतिरासीत् ।
लोकं पृण ता अस्येन्द्रं विश्वाः ॥४॥ (९) ३५ (८४)

ध्रुवक्षितिः पञ्च ॥ ५ ॥ सजूर्ऋतुभिस्तिस्रः ॥ ३ ॥ मूर्धा वयः पञ्च ॥ ५ ॥ इन्द्राग्नी तिस्रः ॥ ३ ॥ आयुर्मे पद् ॥ ६ ॥ मूर्धासि द्वे ॥ २ ॥ आशुस्त्रिवृद् द्वे ॥ २ ॥ अग्नेर्भागः पञ्च ॥ ५ ॥ एकया चतस्रः ॥ ४ ॥

॥ नवानुवाकेषु पञ्चत्रिंशत् ॥ ३५ ॥

॥ इति शुक्लयजुःकाण्वसंहितायां पञ्चदशोऽध्यायः ॥१५॥

## अथ षोडशोऽध्यायः।

अग्ने जातान्प्रणुदा नः सपत्नान्प्रत्यजाताञ्जातवेदो नुदस्व ।
अधि नो ब्रूहि सुमना अहेळँस्तव स्याम शर्मँस्त्रिवरूथ उद्भौ ॥१॥ १
सहसा जातान्प्रणुदा नः सपत्नान्प्रत्यजातान्नुद जातवेदः ।
अधि नो ब्रूहि सुमनस्यमानो वयँ स्याम प्रणुदा नः सपत्नान् ।
षोळशी स्तोम ओजो द्रविणं चतुश्चत्वारिँश स्तोमो वर्चो द्रविणम् ॥२॥ २
अग्नेः पुरीषमस्यप्सो नाम तां त्वा विश्वे अभिगृणन्तु देवाः ।
स्तोमपृष्ठा घृतवतीह सीद प्रजावदस्मे द्रविणायजस्व ॥३॥ ३
एवश्छन्दो वरिवश्छन्दः शम्भूश्छन्दः परिभूश्छन्दः। आच्छच्छन्दो मनश्छन्दो व्यचश्छन्दः॥४॥ ४
सिन्धुश्छन्दः समुद्रश्छन्दः सरिरं छन्दः ।
ककुप् छन्दस्त्रिककुप् छन्दः काव्यं छन्दो अङ्कुपं छन्दः ॥५॥ ५
अक्षरपङ्क्तिश्छन्दः पदपङ्क्तिश्छन्दो विष्टारपङ्क्तिश्छन्दः क्षुरोभ्रजश्छन्दः।
आच्छच्छन्दः प्रच्छच्छन्दः संयच्छन्दो वियच्छन्दः ॥६॥ ६
बृहच्छन्दो रथन्तरं छन्दो निकायश्छन्दो विवधश्छन्दः ।
गिरश्छन्दो भ्रजश्छन्दः सँस्तुप् छन्दोऽनुष्टुप् छन्दः ॥७॥ ७
एवश्छन्दो वरिवश्छन्दो वयश्छन्दो वयस्कृच्छन्दः ।
विष्पर्धाश्छन्दो विशालं छन्दश्छदिश्छन्दो दूरोहणं छन्दः । तन्द्रं छन्दो अङ्काङ्कं छन्दः ॥८॥(१)८

रश्मिना सत्याय सत्यं जिन्व प्रेतिना धर्मणा धर्मं जिन्व ।
अन्वित्या दिवा दिवं जिन्व सन्धिनान्तरिक्षेणान्तरिक्षं जिन्व ॥१॥ ९
प्रतिधिना पृथिव्या पृथिवीं जिन्व विष्टम्भेन वृष्ट्या वृष्टिं जिन्व ।
प्रवयाह्नाहर्जिन्वानुया रात्र्या रात्रीं जिन्व ॥२॥ १०
उशिजा वसुभ्यो वसूञ्जिन्व प्रकेतेनादित्येभ्य आदित्याञ्जिन्व ।
तन्तुना रायस्पोषेण रायस्पोषं जिन्व सँसर्पेण श्रुताय श्रुतं जिन्व ॥३॥ ११
ऐळेनौषधीभिरोषधीर्जिन्वोत्तमेन तनूभिस्तनूर्जिन्व ।
वयोधसाधीतेनाधीतं जिन्वाभिजिता तेजसा तेजो जिन्व ॥४॥ १२
प्रतिपदसि प्रतिपदे त्वानुपदस्यनुपदे त्वा । सम्पदसि सम्पदे त्वा तेजोऽसि तेजसे त्वा ॥५॥ १३
त्रिवृदसि त्रिवृते त्वा प्रवृदसि प्रवृते त्वा । विवृदसि विवृते त्वा सवृदसि सवृते त्वा॥६॥१४[८६३]

आक्रमोऽस्याक्रमाय त्वा सङ्क्रमोऽसि सङ्क्रमाय त्वा ।
उत्क्रमोऽस्युत्क्रमाय त्वोत्क्रान्तिरस्युत्क्रान्त्यै त्वा ।
अधिपतिनोर्जोर्जं जिन्व वृषश्रीः क्षत्राय क्षत्रं जिन्व ॥७॥ (२) १५

राज्ञ्यसि प्राची दिग्वसवस्ते देवा अधिपतयः । अग्निर्हेतीनां प्रतिधर्ता ॥१॥ १६
त्रिवृत् त्वा स्तोमः पृथिव्याꣳ श्रयत्वाज्यमुक्थमव्यथायै स्तभ्नातु ।
रथन्तरꣳ साम प्रतिष्ठित्या अन्तरिक्षे ॥२॥ १७
ऋषयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिम्णा प्रथन्तु ।
विधर्ता चायमधिपतिश्च ते त्वा सर्वे संविदाना नाकस्य
पृष्ठे स्वर्गे लोके यजमानं च सादयन्तु ॥३॥ १८
विराळसि दक्षिणा दिग्रुद्रास्ते देवा अधिपतयः । इन्द्रो हेतीनां प्रतिधर्ता ॥४॥ १९
पञ्चदशस्त्वा स्तोमः पृथिव्याꣳ श्रयतु प्रउगमुक्थमव्यथायै स्तभ्नातु ।
बृहत्साम प्रतिष्ठित्या अन्तरिक्षे ॥५॥ २०
ऋषयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिम्णा प्रथन्तु ।
विधर्ता चायमधिपतिश्च ते त्वा सर्वे संविदाना नाकस्य
पृष्ठे स्वर्गे लोके यजमानं च सादयन्तु ॥६॥ २१
सम्राळसि प्रतीची दिगादित्यास्ते देवा अधिपतयः । वरुणो हेतीनां प्रतिधर्ता ॥७॥ २२
सप्तदशस्त्वा स्तोमः पृथिव्याꣳ श्रयतु मरुत्वतीयमुक्थमव्यथायै स्तभ्नातु ।
वैरूपꣳ साम प्रतिष्ठित्या अन्तरिक्षे ॥८॥ २३
ऋषयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिम्णा प्रथन्तु ।
विधर्ता चायमधिपतिश्च ते त्वा सर्वे संविदाना नाकस्य
पृष्ठे स्वर्गे लोके यजमानं च सादयन्तु ॥९॥ २४
स्वराळस्युदीची दिङ् मरुतस्ते देवा अधिपतयः । सोमो हेतीनां प्रतिधर्ता ॥१०॥ २५
एकविꣳशस्त्वा स्तोमः पृथिव्याꣳ श्रयतु निष्कैवल्यमुक्थमव्यथायै स्तभ्नातु ।
वैराजꣳ साम प्रतिष्ठित्या अन्तरिक्षे ॥११॥ २६
ऋषयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिम्णा प्रथन्तु ।
विधर्ता चायमधिपतिश्च ते त्वा सर्वे संविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्तु ॥१२॥ २७
आधिपत्न्यसि बृहती दिग्विश्वे ते देवा अधिपतयः । बृहस्पतिर्हेतीनां प्रतिधर्ता ॥१३॥ २८ [८७]

त्रिणवत्रयस्त्रिꣳशौ त्वा स्तोमौ पृथिव्याꣳ श्रयतां वैश्वदेवाग्निमारुते उक्थे अव्यथायै स्तभ्नीताम्।
शाक्वररैवते सामनी प्रतिष्ठित्या अन्तरिक्षे ॥१४॥ २९
ऋषयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिम्णा प्रथन्तु।
विधर्ता चायमधिपतिश्च ते त्वा सर्वे संविदाना नाकस्य
पृष्ठे स्वर्गे लोके यजमानं च सादयन्तु ॥१५॥ (३) ३०

अयं पुरो हरिकेशः सूर्यरश्मिस्तस्य रथगृत्सश्च रथौजाश्च सेनानीग्रामण्यौ।
पुञ्जिकस्थला च क्रतुस्थला चाप्सरसौ दङ्क्ष्णवः पशवो हेतिः पौरुषेयो वधः प्रहेतिः ॥१॥ ३१
तेभ्यो नमो अस्तु ते नो मृळयन्तु ते नोऽवन्तु।
ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥२॥ ३२
अयं दक्षिणा विश्वकर्मा तस्य रथस्वनश्च रथेचित्रश्च सेनानीग्रामण्यौ।
मेनका च सहजन्या चाप्सरसौ यातुधाना हेती रक्षाꣳसि प्रहेतिः ॥३॥ ३३
तेभ्यो नमो अस्तु ते नो मृळयन्तु ते नोऽवन्तु। ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥४॥ ३४
अयं पश्चाद्विश्वव्यचास्तस्य रथप्रोतश्चासमरथश्च सेनानीग्रामण्यौ।
प्रम्लोचन्ती चानुम्लोचन्ती चाप्सरसौ व्याघ्रा हेतिः सर्पाः प्रहेतिः ॥५॥ ३५
तेभ्यो नमो अस्तु ते नो मृळयन्तु ते नोऽवन्तु।
ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥६॥ ३६
अयमुत्तरात्संयद्वसुस्तस्य तार्क्ष्यश्चारिष्टनेमिश्च सेनानीग्रामण्यौ।
विश्वाची च घृताची चाप्सरसा आपो हेतिर्वातः प्रहेतिः ॥७॥ ३७
तेभ्यो नमो अस्तु ते नो मृळयन्तु ते नोऽवन्तु।
ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥८॥ ३८
अयमुपर्यर्वाग्वसुस्तस्य सेनजिच्च सुषेणश्च सेनानीग्रामण्यौ।
उर्वशी च पूर्वचित्तिश्चाप्सरसा अवस्फूर्जन्हेतिर्विद्युत्प्रहेतिः ॥९॥ ३९
तेभ्यो नमो अस्तु ते नो मृळयतु ते नोऽवन्तु।
ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥१०॥ (४) ४०

अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम्। अपाꣳ रेताꣳसि जिन्वति ॥१॥ ४१
अयमग्निः सहस्रिणो वाजस्य शतिनस्पतिः। मूर्धा कवी रयीणाम् ॥२॥ ४२
त्वामग्ने पुष्करादध्यथर्वा निरमन्थत। मूर्ध्नो विश्वस्य वाघतः ॥३॥ ४३

भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचसे शिवाभिः ।
दिवि मूर्धानं दधिषे स्वर्षां जिह्वामग्ने चकृषे हव्यवाहम् ॥४॥ ४४
अबोध्यग्निः समिधा जनानां प्रति धेनुमिवायतीमुषासम् ।
यह्वा इव प्र वयामुज्जिहानाः प्र भानवः सिस्रते नाकमच्छ ॥५॥ ४५
अवोचाम कवये मेध्याय वचो वन्दारु वृषभाय वृष्णे ।
गविष्ठिरो नमसा स्तोममग्नौ दिवीव रुक्ममुरुव्यञ्चमश्रेत् ॥६॥ ४६
अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठो अध्वरेष्वीड्यः ।
यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशेविशे ॥७॥ ४७
जनस्य गोपा अजनिष्ट जागृविरग्निः सुदक्षः सुविताय नव्यसे ।
घृतप्रतीको बृहता दिविस्पृशा द्युमद्विभाति भरतेभ्यः शुचिः ॥८॥ ४८
त्वामग्ने अङ्गिरसो गुहा हितमन्वविन्दञ्छिश्रियाणं वनेवने ।
स जायसे मथ्यमानः सहो महत्त्वामाहुः सहसस्पुत्रमङ्गिरः ॥९॥ ४९
सखायः सं वः सम्यञ्चमिषꣳ स्तोमं चाग्नये । वर्षिष्ठाय क्षितीनामूर्जो नप्त्रे सहस्वते ॥१०॥ ५०
सꣳ समिद्युवसे वृषन्नग्ने विश्वान्यर्य आ । इळस्पदे समिध्यसे स नो वसून्याभर ॥११॥ ५१
त्वामग्ने हविष्मन्तो देवं मर्तास ईळते । मन्ये त्वा जातवेदसꣳ स हव्या वक्ष्यानुषक् ॥१२॥ ५२
त्वां चित्रश्रवस्तम हवन्ते विक्षु जन्तवः । शोचिष्केशं पुरुप्रियाग्ने हव्याय वोळ्हवे ॥१३॥ ५३
एना वो अग्निं नमसोर्जो नपातमाहुवे । प्रियं चेतिष्ठमरतिꣳ स्वध्वरं विश्वस्य दूतममृतम् ॥१४॥ ५४
विश्वस्य दूतममृतं विश्वस्य दूतममृतम् । स योजते अरुषा विश्वभोजसा स दुद्रवत्स्वाहुतः ॥१५॥ ५५
स दुद्रवत् स्वाहुतः स दुद्रवत् स्वाहुतः । सुब्रह्मा यज्ञः सुशमी वसूनां देवꣳ राधो जनानाम् ॥१६॥ ५६
अग्ने वाजस्य गोमत ईशानः सहसो यहो । अस्मे धेहि जातवेदो महि श्रवः ॥१७॥ ५७
स इधानो वसुष्कविरग्निरीळेन्यो गिरा । रेवदस्मभ्यं पुर्वणीक दीदिहि ॥१८॥ ५८
क्षपो राजन्नुत त्मनाग्ने वस्तोरुतोषसः । स तिग्मजम्भ रक्षसो दह प्रति ॥१९॥ ५९
भद्रो नो अग्निराहुतो भद्रा रातिः सुभग भद्रो अध्वरः । भद्रा उत प्रशस्तयः ॥२०॥ ६०
भद्रा उत प्रशस्तयो भद्रं मनः कृणुष्व वृत्रतूर्ये । येना समत्सु सासहः ॥२१॥ ६१
येना समत्सु सासहोऽव स्थिरा तनुहि भूरि शर्धताम् । वनेमा ते अभिष्टिभिः ॥२२॥ ६२
अग्निं तं मन्ये यो वसुरस्तं यं यन्ति धेनवः ।
अस्तमर्वन्त आशवोऽस्तं नित्यासो वाजिन इषꣳ स्तोतृभ्य आभर ॥२३॥ ६३ [१११]

सो अग्निर्यो वसुर्गृणे सं यमायन्ति धेनवः ।
समर्वन्तो रघुद्रुवः सँ सुजातासः सूरय इषँ स्तोतृभ्य आभर ॥२४॥ ६४
उभे सुश्चन्द्र सर्पिषो दर्वी श्रीणीष आसनि ।
उतो न उत्पुपूर्या उक्थेषु शवसस्पत इषँ स्तोतृभ्य आभर ॥२५॥ ६५
अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रँ हृदिस्पृशम् । ऋध्यामा त ओहैः ॥२६॥ ६६
अधा ह्यग्ने क्रतोर्भद्रस्य दक्षस्य साधोः । रथीर्ऋतस्य बृहतो बभूथ ॥२७॥ ६७
एभिर्नो अर्कैर्भवा नो अर्वाङ् स्वर्ण ज्योतिः । अग्ने विश्वेभिः सुमना अनीकैः ॥२८॥ ६८
अग्निँ होतारं मन्ये दास्वन्तं वसुँ सूनुँ सहसो जातवेदसं विप्रं न जातवेदसम् ।
य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा ।
घृतस्य विभ्राष्टिमनुवष्टि शोचिषाजुह्वानस्य सर्पिषः ॥२९॥ ६९
अग्ने त्वं नो अन्तम उत त्राता शिवो भवा वरूथ्यः ।
वसुरग्निर्वसुश्रवा अच्छा नक्षि द्युमत्तमँ रयिन्दाः ।
तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः ॥३०॥ (५) ७०

येन ऋषयस्तपसा सत्रमायन्निन्धाना अग्निँ स्वराभरन्तः ।
तस्मिन्नहं निदधे नाके अग्निं यमाहुर्मनव स्तीर्णबर्हिषम् ॥१॥ ७१
तं पत्नीभिरनु गच्छेम देवाः पुत्रैर्भ्रातृभिरुत वा हिरण्यैः ।
नाकं गृभ्णानाः सुकृतस्य लोके तृतीये पृष्ठे अधि रोचने दिवः ॥२॥ ७२
आ वाचो मध्यमरुहद्भुरण्युरयमग्निः सत्पतिश्चेकितानः ।
पृष्ठे पृथिव्या निहितो दविद्युतदधस्पदं कृणुतां ये पृतन्यवः ॥३॥ ७३
अयमग्निर्वीरतमो वयोधाः सहस्रियो द्योततामप्रयुच्छन् ।
विभ्राजमानः सरिरस्य मध्य उप प्रयाहि दिव्यानि धाम ॥४॥ ७४
सम्प्रच्यवध्वमुप सम्प्रयाताग्ने पथो देवयानान् कृणुध्वम् ।
पुनः कृण्वाना पितरा युवानान्वाताँसीत् त्वयि तन्तुमेतम् ॥५॥ ७५
उद्बुध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्ते सँसृजेथामयं च ।
अस्मिन्त्सधस्थे अध्युत्तरस्मिन् विश्वे देवा यजमानश्च सीदत ॥६॥ ७६
येन वहसि सहस्रं येनाग्ने सर्ववेदसम् । तेनेमं यज्ञं नो नय स्वर्देवेषु गन्तवे ॥७॥ ७७
अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः । तं जानन्नग्न आरोहाथा नो वर्धया रयिम् ॥८॥ (६) ७८

तपश्च तपस्यश्च शैशिरा ऋतू अग्नेरन्तःश्लेषोऽसि ।
कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः कल्पन्तामग्नयः पृथङ् मम ज्यैष्ठ्याय सव्रताः ।
ये अग्नयः समनसोऽन्तरा द्यावापृथिवी इमे ।
शैशिरा ऋतू अभिकल्पमाना इन्द्रमिव देवा अभिसंविशन्तु तया देवतयाङ्गिरस्वद् ध्रुवे सीदतम् ।
परमेष्ठी त्वा सादयतु दिवस्पृष्ठे ज्योतिष्मतीम् ।
विश्वस्मै प्राणायापानाय व्यानाय विश्वं ज्योतिर्यच्छ ।
सूर्यस्तेऽधिपतिस्तया देवतयाङ्गिरस्वद् ध्रुवा सीद ॥१॥ ७९
लोकं पृण छिद्रं पृणाथो सीद ध्रुवा त्वम् । इन्द्राग्नी त्वा बृहस्पतिरस्मिन् योना असीषदन् ॥२॥ ८०
ता अस्य सूददोहसः सोमꣳ श्रीणन्ति पृश्नयः । जन्मन्देवानां विशस्त्रिष्वारोचने दिवः ॥३॥ ८१
इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः । रथीतमꣳ रथीनां वाजानाꣳ सत्पतिं पतिम् ॥४॥ ८२
प्रोथदश्वो न यवसेऽविष्यन्यदा महः संवरणाद्व्यस्थात् ।
आदस्य वातो अनुवाति शोचिरध स्म ते व्रजनं कृष्णमस्ति ॥५॥ ८३
आयोष्ट्वा सदने सादयाम्यवतश्छायायाꣳ समुद्रस्य हृदये ।
रश्मीवतीं भास्वतीमा या द्यां भास्यापृथिवीमोर्वन्तरिक्षम् ।
परमेष्ठी त्वा सादयतु दिवस्पृष्ठे व्यचस्वतीं प्रथस्वतीम् । दिवं यच्छ दिवं दृꣳह दिवं मा हिꣳसीः ।
विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय ।
सूर्यस्त्वाभिपातु मह्या स्वस्त्या छर्दिषा शन्तमेन तया देवतयाङ्गिरस्वद् ध्रुवे सीदतम् ॥६॥ ८४
सहस्रस्य प्रमासि सहस्रस्य प्रतिमासि सहस्रस्योन्मासि । साहस्रोऽसि सहस्राय त्वा ॥७॥(७)८५[१३४]

अग्ने जातानष्ट ॥ ८ ॥ रश्मिना सत्याय सप्त ॥ ७ ॥ राज्ञ्यसि पञ्चदश ॥ १५ ॥ अयं पुरो दश ॥ १० ॥
अग्निर्मूर्धा त्रिंशत् ॥ ३० ॥ येन ऋषयोऽष्ट ॥ ८ ॥ तपश्च सप्त ॥ ७ ॥
सप्तानुवाकेषु पञ्चाशीतिः ॥ ८५ ॥ अग्ने जातोऽ ग्नेजातान् पञ्चाशीतिः॥
॥ इति शुक्लयजुःकाण्वसंहितायां षोडशोऽध्यायः ॥१६॥

## अथ सप्तदशोऽध्यायः ।

नमस्ते रुद्र मन्यव उतो त इषवे नमः । बाहुभ्यामुत ते नमः ॥१॥ १
या ते रुद्र शिवा तनूरघोरापापकाशिनी । तया नस्तन्वा शन्तमया गिरिशन्ताभिचाकशीहि ॥२॥ २
यामिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे । शिवां गिरित्र तां कुरु मा हिꣳसीः पुरुषं जगत् ॥३॥ ३
शिवेन वचसा त्वा गिरिशाच्छा वदामसि । यथा नः सर्वमिज्जगदयक्ष्मꣳ सुमना असत् ॥४॥ ४

अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक् ।
अहींश्च सर्वाञ्जम्भयन्त्सर्वांश्च यातुधान्योऽवराचीः परासुव ॥५॥ ५
असौ यस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः ।
ये चैनꣳरुद्रा अभितो दिक्षु श्रिताः सहस्रशोऽवैषाꣳ हेळ ईमहे ॥६॥ ६
असौ योऽवसर्पति नीलग्रीवो विलोहितः ।
उतैनं गोपा अदृश्रन्नदृश्रन्नुदहार्यः स दृष्टो मृळयाति नः ॥७॥ ७
नमोऽस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे ।
अथो ये अस्य सत्वानोऽहं तेभ्योऽकरं नमः ॥८॥ ८
प्रमुञ्च धन्वनस्त्वमुभयोरार्त्न्योर्ज्याम् । याश्च ते हस्त इषवः परा ता भगवो वप ॥९॥ ९
विज्यं धनुः कपर्दिनो विशल्यो बाणवाँ२ उत ।
अनेशन्नस्य या इषव आभुरस्य निषङ्गधिः ॥१०॥ १०
परि ते धन्वनो हेतिरस्मान्वृणक्तु विश्वतः । अथो य इषुधिस्तवारे अस्मन्निधेहि तम् ॥११॥ ११
या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः । तयास्मान्विश्वतस्त्वमयक्ष्मया परिभुज ॥१२॥ १२
अवतत्य धनुष्ट्वꣳ सहस्राक्ष शतेषुधे । निशीर्य शल्यानां मुखा शिवो नः सुमना भव ॥१३॥ १३
नमस्त आयुधायानातताय धृष्णवे । उभाभ्यामुत ते नमो बाहुभ्यां तव धन्वने ॥१४॥ १४
मा नो महान्तमुत मा नो अर्भकं मा न उक्षन्तमुत मा न उक्षितम् ।
मा नो वधीः पितरं मोत मातरं मा नः प्रियास्तन्वो रुद्र रीरिषः ॥१५॥ १५
मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः ।
मा नो वीरान् रुद्र भामिनो वधीर्हविष्मन्तः सदमित् त्वा हवामहे ॥१६॥ (१) १६

नमो हिरण्यबाहवे सेनान्ये दिशां च पतये नमो नमो वृक्षेभ्यो हरिकेशेभ्यः पशूनां पतये नमः ।
नमः शष्पिञ्जराय त्विषीमते पथीनां पतये नमो नमो
हरिकेशायोपवीतिने पुष्टानां पतये नमः ॥१॥ १७
नमो बभ्लुशायाव्याधिनेऽन्नानां पतये नमो नमो भवस्य हेत्यै जगतां पतये नमः ।
नमो रुद्रायाततायिने क्षेत्राणां पतये नमो नमः सूतायाहन्त्यै वनानां पतये नमः ॥२॥ १८
नमो रोहिताय स्थपतये वृक्षाणां पतये नमो नमो भुवन्तये वारिवस्कृतायौषधीनां पतये नमः ।
नमो मन्त्रिणे वाणिजाय कक्षाणां पतये नमो नम उच्चैर्घोषायाक्रन्दयते पत्तीनां पतये नमः॥३॥ १९

नमः कृत्स्नायताय धावते सत्वनां पतये नमो नमः
सहमानाय निव्याधिन आव्याधिनीनां पतये नमः ।
नमः ककुभाय निषङ्गिणे स्तेनानां पतये नमो नमो निचेरवे परिचरायारण्यानां पतये नमः ॥४॥ २०

नमो वञ्चते परिवञ्चते स्तायूनां पतये नमो नमो निषङ्गिण इषुधिमते तस्कराणां पतये नमः ।
नमः सृकायिभ्यो जिघांसद्भ्यो मुष्णतां पतये नमो
नमोऽसिमद्भ्यो नक्तञ्चरद्भ्यो विकृन्तानां पतये नमः ॥५॥ (२) २१

नम उष्णीषिणे गिरिचराय कुलुञ्चानां पतये नमो नम इषुमद्भ्यो धन्वायिभ्यश्च वो नमः ।
नम आतन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमो नम आयच्छद्भ्योऽस्यद्भ्यश्च वो नमः ॥१॥ २२
नमो विसृजद्भ्यो विध्यद्भ्यश्च वो नमो-नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमः ।
नमः शयानेभ्य आसीनेभ्यश्च वो नमो नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमः ॥२॥ २३
नमः सभाभ्यः सभापतिभ्यश्च वो नमो नमोऽश्वेभ्योऽश्वपतिभ्यश्च वो नमः ।
नम आव्याधिनीभ्यो विविध्यन्तीभ्यश्च वो नमो नम उगणाभ्यस्तृंहतीभ्यश्च वो नमः ॥३॥ २४
नमो गणेभ्यो गणपतिभ्यश्च वो नमो नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमः ।
नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमः ॥४॥ २५
नमः सेनाभ्यः सेनानिभ्यश्च वो नमो नमो रथिभ्यो अरथेभ्यश्च वो नमः ।
नमः क्षत्तृभ्यः सङ्ग्रहीतृभ्यश्च वो नमो नमो महद्भ्यो अर्भकेभ्यश्च वो नमः ॥५॥ (३) २६

नमस्तक्षभ्यो रथकारेभ्यश्च वो नमो नमः कुलालेभ्यः कर्मारेभ्यश्च वो नमः ।
नमो निषादेभ्यः पुञ्जिष्ठेभ्यश्च वो नमो नमः श्वनिभ्यो मृगयुभ्यश्च वो नमः ॥१॥ २७
नमः श्वभ्यः श्वपतिभ्यश्च वो नमो नमो भवाय च रुद्राय च ।
नमः शर्वाय च पशुपतये च नमो नीलग्रीवाय च शितिकण्ठाय च ॥२॥ २८
नमः कपर्दिने च व्युप्तकेशाय च नमः सहस्राक्षाय च शतधन्वने च ।
नमो गिरिशयाय च शिपिविष्टाय च नमो मीढुष्टमाय चेषुमते च ॥३॥ २९
नमो ह्रस्वाय च वामनाय च नमो बृहते च वर्षीयसे च ।
नमो वृद्धाय च सवृधे च नमोऽग्र्याय च प्रथमाय च ॥४॥ ३०
नम आशवे चाजिराय च नमः शीघ्र्याय च शीभ्याय च ।
नम ऊर्म्याय चावस्वन्याय च नमो नादेयाय च द्वीप्याय च ॥५॥ (४) ३१ [१६५]

नमो ज्येष्ठाय च कनिष्ठाय च नमः पूर्वजाय चापरजाय च ।
नमो मध्यमाय चापगल्भाय च नमो जघन्याय च बुध्न्याय च ॥१॥ ३२
नमः सोभ्याय च प्रतिसर्याय च नमो याम्याय च क्षेम्याय च ।
नमः श्लोक्याय चावसान्याय च नम उर्वर्याय च खल्याय च ॥२॥ ३३
नमो वन्याय च कक्ष्याय च नमः श्रवाय च प्रतिश्रवाय च ।
नम आशुषेणाय चाशुरथाय च नमः शूराय चावभेदिने च ॥३॥ ३४
नमो बिल्मिने च कवचिने च नमो वर्मिणे च वरूथिने च ।
नमः श्रुताय च श्रुतसेनाय च नमो दुन्दुभ्याय चाहनन्याय च ॥४॥ ३५
नमो धृष्णवे च प्रमृशाय च नमो निषङ्गिणे चेषुधिमते च ।
नमस्तीक्ष्णेषवे चायुधिने च नमः स्वायुधाय च सुधन्वने च ॥५॥ (५) ३६

नमः स्रुत्याय च पथ्याय च नमः काट्याय च नीप्याय च ।
नमः कुल्याय च सरस्याय च नमो नादेयाय च वैशन्ताय च ॥१॥ ३७
नमः कूप्याय चावट्याय च नम ईध्र्याय चातप्याय च ।
नमो मेघ्याय च विद्युत्याय च नमो वर्ष्याय चावर्ष्याय च ॥२॥ ३८
नमो वात्याय च रेष्म्याय च नमो वास्तव्याय च वास्तुपाय च ।
नमः सोमाय च रुद्राय च नमस्ताम्राय चारुणाय च ॥३॥ ३९
नमः शङ्गवे च पशुपतये च नम उग्राय च भीमाय च ।
नमोऽग्रेवधाय च दूरेवधाय च नमो हन्त्रे च हनीयसे च ॥४॥ ४०
नमो वृक्षेभ्यो हरिकेशेभ्यो नमस्ताराय ।
नमः शम्भवे च मयोभवे च नमः शङ्कराय च मयस्कराय
च नमः शिवाय च शिवतराय च ॥५॥(६) ४१

नमः पार्याय चावार्याय च नमः प्रतरणाय चोत्तरणाय च।
नमस्तीर्थ्याय च कूल्याय च नमः शष्प्याय च फेन्याय च ॥१॥ ४२
नमः सिकत्याय च प्रवाह्याय च नमः किंशिलाय च क्षयणाय च ।
नमः कपर्दिने च पुलस्तिने च नम इरिण्याय च प्रपथ्याय च ॥२॥ ४३
नमो व्रज्याय च गोष्ठ्याय च नमस्तल्प्याय च गेह्याय च ।
नमो हृदय्याय च निवेष्प्याय च नमः काट्याय च गह्वरेष्ठाय च ॥३॥ ४४[१७८]

नमः शुष्क्याय च हरित्याय च नमः पाꣳसव्याय च रजस्याय च ।
नमो लोप्याय चोलप्याय च नम ऊर्व्याय च सूर्व्याय च ॥४॥ ४५
नमः पर्णाय च पर्णशदाय च नम उद्गुरमाणाय चाभिघ्नते च ।
नम आखिदते च प्रखिदते च नम इषुकृद्भ्यो धनुष्कृद्भ्यश्च वो नमः ।
नमो वः किरिकेभ्यो देवानाꣳ हृदयेभ्यो नमो विचिन्वत्केभ्यो
नमो विक्षिणत्केभ्यो नम आनिर्हतेभ्यः ॥५॥ (७) ४६

द्रापे अन्धसस्पते दरिद्र नीललोहित ।
आसां प्रजानामेषां पशूनां मा भेर्मा रोङ्मो च नः किञ्चनाममत् ॥१॥ ४७
इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतीः ।
यथा शमसद् द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् ॥२॥ ४८
या ते रुद्र शिवा तनूः शिवा विश्वाहा भेषजी । शिवा रुतस्य भेषजी तया नो मृळ जीवसे ॥३॥ ४९
परि णो हेती रुद्रस्य वृज्यात् परि त्वेषस्य दुर्मतिरघायोः ।
अव स्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृळ ॥४॥ ५०
मीढुष्टम शिवतम शिवो नः सुमना भव ।
परमे वृक्ष आयुधं निधाय कृत्तिं वसान आचर पिनाकं बिभ्रदागहि ॥५॥ ५१
विकिरिद्र विलोहित नमस्ते अस्तु भगवः । यास्ते सहस्रꣳ हेतयोऽन्यमस्मन्निवपन्तु ताः ॥६॥ ५२
सहस्राणि सहस्रशो बाह्वोस्तव हेतयः । तासामीशानो भगवः पराचीना मुखा कृधि ॥७॥ ५३
असंख्याता सहस्राणि ये रुद्रा अधि भूम्याम् । तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि ॥८॥ ५४
अस्मिन् महत्यर्णवेऽन्तरिक्षे भवा अधि । तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि ॥९॥ ५५
नीलग्रीवाः शितिकण्ठा दिवꣳ रुद्रा उपश्रिताः । तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि ॥१०॥ ५६
नीलग्रीवाः शितिकण्ठाः शर्वा अधः क्षमाचराः । तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि ॥११॥ ५७
ये वृक्षेषु शष्पिञ्जरा नीलग्रीवा विलोहिताः । तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि ॥१२॥ ५८
ये भूतानामधिपतयो विशिखासः कपर्दिनः । तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि ॥१३॥ ५९
ये पथां पथिरक्षय ऐलबृदा आयुर्युधः । तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि ॥१४॥ ६०
ये तीर्थानि प्रचरन्ति सृकाहस्ता निषङ्गिणः । तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि ॥१५॥ ६१
येऽन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान् । तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि ॥१६॥ ६२
य एतावन्तश्च भूयाꣳसश्च दिशो रुद्रा वितस्थिरे । तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि ॥१७॥ ६३

नमोऽस्तु रुद्रेभ्यो ये दिवि येषां वर्षमिषवः ।
तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वाः ।
तेभ्यो नमो अस्तु ते नो मृळयन्तु ते नोऽवन्तु ।
ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ।
नमोऽस्तु रुद्रेभ्यो येऽन्तरिक्षे येषां वात इषवः ।
तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वाः ।
तेभ्यो नमो अस्तु ते नो मृळयन्तु ते नोऽवन्तु ।
ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ।
नमोऽस्तु रुद्रेभ्यो ये पृथिव्यां येषामन्नमिषवः ।
तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वाः ।
तेभ्यो नमो अस्तु ते नो मृळयन्तु ते नोऽवन्तु ।
ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥१८॥(८) ६४ [९९८]

नमस्ते षोळश ॥ १६ ॥ नमो हिरण्यबाहवे पञ्च ॥५॥ नम उष्णीषिणे पञ्च ॥५॥ नमस्तक्षभ्यः पञ्च ॥५॥ नमो ज्येष्ठाय पञ्च ॥५॥ नमः स्रुत्याय पञ्च ॥ ५ ॥ नमः पार्याय पञ्च ॥ ५ ॥ द्रापे अन्धसस्पत अष्टादश ॥ १८ ॥ अष्टानुवाकेषु चतुःषष्टिः ॥ ६४ ॥

॥ इति शुक्लयजुःकाण्वसंहितायां सप्तदशोऽध्यायः ॥१७॥

## अथाष्टादशोऽध्यायः ।

अश्मन्नूर्जं पर्वते शिश्रियाणामद्भ्य ओषधीभ्यो वनस्पतिभ्यो अधि संभृतं पयः ।
तां न इषमूर्जं धत्त मरुतः सꣳरराणा अश्मꣳस्ते क्षुन्मयि त ऊर्ग्यं द्विष्मस्तं ते शुगृच्छतु ॥१॥ १
इमा मे अग्न इष्टका धेनवः सन्त्वेका च दश च दश च शतं च शतं च ।
सहस्रं च सहस्रं चायुतं चायुतं च नियुतं च नियुतं च ॥२॥ २
अर्बुदं च न्यर्बुदं च समुद्रश्च मध्यं चान्तश्च परार्धश्च ।
एता मे अग्न इष्टका धेनवः सन्त्वमुत्रामुष्मिँल्लोके ॥३॥ ३
ऋतव स्थ ऋतावृध ऋतुष्ठा स्थ ऋतावृधः ।
घृतश्च्युतो मधुश्च्युतो विराजो नाम कामदुघा अक्षीयमाणाः ॥४॥ ४
समुद्रस्य त्वावकयाग्ने परिव्ययामसि । पावको अस्मभ्यꣳ शिवो भव ॥५॥ ५
हिमस्य त्वा जरायुणाग्ने परिव्ययामसि । पावको अस्मभ्यꣳ शिवो भव ॥६॥ ६ [१००४]

उप ज्मन्नुप वेतसेऽवतर नदीष्वा ।
अग्ने पित्तमपामसि मण्डूकि ताभिरागहि सेमं नो यज्ञं पावकवर्णꣳ शिवं कृधि ॥७॥ ७
अपामिदं न्ययनꣳ समुद्रस्य निवेशनम् ।
अन्याꣳस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यꣳ शिवो भव ॥८॥ ८
अग्ने पावक रोचिषा मन्द्रया देव जिह्वया । आ देवान्वक्षि यक्षि च ॥९॥ ९
स नः पावक दीदिवोऽग्ने देवाँ२ इहावह । उप यज्ञꣳ हविश्च नः ॥१०॥ १०
पावकया यश्चितयन्त्या कृपा क्षामन् रुरुच उषसो न भानुना ।
तूर्वन्न यामन्नेतशस्य नू रण आ यो घृणे न ततृषाणो अजरः ॥११॥ ११
नमस्ते हरसे शोचिषे नमस्ते अस्त्वर्चिषे ।
अन्याꣳस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यꣳ शिवो भव ।
नृषदे वेळप्सुषदे वेड् बर्हिषदे वेड् वनसदे वेट् स्वर्विदे वेट् ॥१२॥ १२
ये देवा देवानां यज्ञिया यज्ञियानाꣳ संवत्सरीणमुप भागमासते ।
अहुतादो हविषो यज्ञे अस्मिन्त्स्वयं पिबन्तु मधुनो घृतस्य ॥१३॥ १३
ये देवा देवेष्वधि देवत्वमायन्ये ब्रह्मणः पुर एतारो अस्य ।
येभ्यो न ऋते पवते धाम किञ्चन न ते दिवो न पृथिव्या अधि स्नुषु ॥१४॥ १४
प्राणदा अपानदा व्यानदा वर्चोदा वरिवोदाः ।
अन्याꣳस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यꣳ शिवो भव ॥१५॥ (१) १५

अग्निस्तिग्मेन शोचिषा यासद्विश्वं न्यत्रिणम् । अग्निर्नो वनते रयिम् ॥१॥ १६
य इमा विश्वा भुवनानि जुह्वदृषिर्होता न्यसीदत्पिता नः ।
स आशिषा द्रविणमिच्छमानः प्रथमच्छदवराँ२ आविवेश ॥२॥ १७
किꣳस्विदासीदधिष्ठानमारम्भणं कतमत्स्वित्कथासीत् ।
यतो भूमिं जनयन्विश्वकर्मा वि द्यामौर्णोन्महिना विश्वचक्षाः ॥३॥ १८
विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् ।
सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन्देव एकः ॥४॥ १९
किꣳस्विद्वनं क उ स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः ।
मनीषिणो मनसा पृच्छतेदु तद्यदध्यतिष्ठद्भुवनानि धारयन् ॥५॥ २०[१०१८]

या ते धामानि परमाणि यावमा या मध्यमा विश्वकर्मन्नुतेमा ।
शिक्षा सखिभ्यो हविषि स्वधावः स्वयं यजस्व तन्वं वृधानः ॥६॥ २१
वाचस्पतिं विश्वकर्माणमूतये मनोजुवं वाजे अद्या हुवेम ।
स नो विश्वानि हवनानि जोषद्विश्वशम्भूरवसे साधुकर्मा ॥७॥ २२
विश्वकर्मन् हविषा वावृधानः स्वयं यजस्व पृथिवीमुत द्याम् ।
मुह्यन्त्वन्ये अभितः सपत्ना इहास्माकं मघवा सूरिरस्तु ॥८॥ २३
विश्वकर्मन् हविषा वर्धनेन त्रातारमिन्द्रमकृणोरयुध्यम् ।
तस्मै विशः समनमन्त पूर्वीरयमुग्रो विहव्यो यथासत् ॥९॥ (२) २४

चक्षुषः पिता मनसा हि धीरो घृतमेने अजनन्नम्नमाने ।
यदेदन्ता अददृहन्त पूर्व आदिद्द्यावापृथिवी अप्रथेताम् ॥१॥ २५
विश्वकर्मा विमना आद्विहाया धाता विधाता परमोत संदृक् ।
तेषामिष्टानि समिषा मदन्ति यत्रा सप्त ऋषीन्पर एकमाहुः ॥२॥ २६
यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा ।
यो देवानां नामधा एक एव तꣳ संप्रश्नं भुवना यन्त्यन्या ॥३॥ २७
त आयजन्त द्रविणꣳ समस्मा ऋषयः पूर्वे जरितारो न भूना ।
असूर्ते सूर्ते रजसि निषत्ते ये भूतानि समकृण्वन्निमानि ॥४॥ २८
परो दिवा पर एना पृथिव्या परो देवेभिरसुरैर्यदस्ति ।
कꣳस्विद् गर्भं प्रथमं दध्र आपो यत्र देवाः समपश्यन्त पूर्वे ॥५॥ २९
तमिद्गर्भं प्रथमं दध्र आपो यत्र देवाः समगच्छन्त विश्वे ।
अजस्य नाभा अध्येकमर्पितं यस्मिन् विश्वानि भुवनानि तस्थुः ॥६॥ ३०
न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव ।
नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति ॥७॥ ३१
विश्वकर्मा ह्यजनिष्ट देव आदिद्गन्धर्वो अभवद् द्वितीयः ।
तृतीयः पिता जनितौषधीनामपां गर्भं व्यदधात्पुरुत्रा ॥८॥ (३) ३२

आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम् ।
संक्रन्दनोऽनिमिष एकवीरः शतꣳ सेना अजयत्साकमिन्द्रः ॥१॥ ३३ [१०३१]

संक्रन्दनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना ।
तदिन्द्रेण जयत तत्सहध्वं युधो नर इषुहस्तेन वृष्णा ॥२॥ ३४
स इषुहस्तैः स निषङ्गिभिर्वशी सꣳस्रष्टा स युध इन्द्रो गणेन ।
सꣳसृष्टजित्सोमपा बाहुशर्ध्युग्रधन्वा प्रतिहिताभिरस्ता ॥३॥ ३५
बृहस्पते परिदीया रथेन रक्षोहामित्राँ२ अपबाधमानः ।
प्रभञ्जन्त्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम् ॥४॥ ३६
बलविज्ञाय स्थविरः प्रवीरः सहस्वान् वाजी सहमान उग्रः ।
अभिवीरो अभिसत्वा सहोजा जैत्रमिन्द्र रथमातिष्ठ गोवित् ॥५॥ ३७
गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्म प्रमृणन्तमोजसा ।
इमꣳ सजाता अनु वीरयध्वमिन्द्रꣳ सखायो अनु सꣳरभध्वम् ॥६॥ ३८
अभि गोत्राणि सहसा गाहमानोऽदयो वीरः शतमन्युरिन्द्रः ।
दुश्च्यवनः पृतनाषाळयुध्योऽस्माकꣳ सेना अवतु प्र युत्सु ॥७॥ ३९
इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः ।
देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रम् ॥८॥ ४०
इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुताꣳ शर्ध उग्रम् ।
महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात् ॥९॥ ४१
उद्धर्षय मघवन्नायुधान्युत्सत्वनां मामकानां मनाꣳसि ।
उद्वृत्रहन् वाजिनां वाजिनान्युद्रथानां जयतां यन्तु घोषाः ॥१०॥ ४२
अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं या इषवस्ता जयन्तु ।
अस्माकं वीरा उत्तरे भवन्त्वस्माँ२ उ देवा अवता हवेषु ॥११॥ ४३
अमीषां चित्तं प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि ।
अभि प्रेहि निर्दह हृत्सु शोकैरन्धेनामित्रास्तमसा सचन्ताम् ॥१२॥ ४४
अवसृष्टा परापत शरव्ये ब्रह्मसꣳशिते । गच्छामित्रान्प्रपद्यस्व मामीषां कञ्चनोच्छिषः ॥१३॥ ४५
प्रेता जयता नर इन्द्रो वः शर्म यच्छतु । उग्रा वः सन्तु बाहवोऽनाधृष्या यथासथ ॥१४॥ ४६
असौ या सेना मरुतः परेषामभ्यैति न ओजसा स्पर्धमाना ।
तां गूहत तमसापव्रतेन यथामी अन्यो अन्यं न जानन् ॥१५॥ ४७
यत्र बाणाः सम्पतन्ति कुमारा विशिखा इव ।
तन्न इन्द्रो बृहस्पतिरदितिः शर्म यच्छतु विश्वाहा शर्म यच्छतु ॥१६॥ ४८ [१०४६]

मर्माणि ते वर्मणा छादयामि सोमस्त्वा राजामृतेनानुवस्ताम्।
उरोर्वरीयो वरुणस्ते कृणोतु जयन्तं त्वानु देवा मदन्तु ॥१७॥ (४) ४९

उदेनमुत्तरां नयाग्ने घृतेनाहुत। रायस्पोषेण सꣳसृज प्रजया च बहुं कृधि ॥१॥ ५०
इन्द्रेमं प्रतरां नय सजातानामसद्वशी। समेनं वर्चसा सृज देवानां भागदा असत्॥२॥५१
यस्य कुर्मो गृहे हविस्तमग्ने वर्धया त्वम्। तस्मै देवा अधिब्रुवन्नयं च ब्रह्मणस्पतिः ॥३॥ ५२
उदु त्वा विश्वे देवा अग्ने भरन्तु चित्तिभिः। स नो भव शिवस्त्वꣳ सुप्रतीको विभावसुः॥४॥ ५३
पञ्च दिशो दैवीर्यज्ञमवन्तु देवीरपामतिं दुर्मतिं बाधमानाः।
रायस्पोषे यज्ञपतिमाभजन्ती रायस्पोषे अधि यज्ञो अस्थात् ॥५॥ ५४
समिद्धे अग्ना अधि मामहान उक्थपत्र ईड्यो गृभीतः।
तप्तं घर्मं परिगृह्यायजन्तोर्जा यद्यज्ञमयजन्त देवाः ॥६॥ ५५
दैव्याय धर्त्रे जोष्ट्रे देवश्रीः श्रीमनाः शतपयाः।
परिगृह्य देवा यज्ञमायन् देवा देवेभ्यो अध्वर्यन्तो अस्थुः ॥७॥ ५६
वीतꣳ हविः शमितꣳ शमिता यजध्यै तुरीयो यज्ञो यत्र हव्यमेति।
ततो वाका आशिषो नो जुषन्ताम् ॥८॥ ५७
सूर्यरश्मिर्हरिकेशः पुरस्तात्सविता ज्योतिरुदयाँ२ अजस्रम्।
तस्य पूषा प्रसवे याति विद्वान्त्संपश्यन्विश्वा भुवनानि गोपाः ॥९॥ ५८
विमान एष दिवो मध्य आस्त आपप्रिवान्रोदसी अन्तरिक्षम्।
स विश्वाचीरभिचष्टे घृताचीरन्तरा पूर्वमपरं च केतुम् ॥१०॥ ५९
उक्षा समुद्रो अरुणः सुपर्णः पूर्वस्य योनिं पितुराविवेश।
मध्ये दिवो निहितः पृश्निरश्मा विचक्रमे रजसस्पात्यन्तौ ॥११॥ ६०
इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः। रथीतमꣳ रथीनां वाजानाꣳ सत्पतिं पतिम् ॥१२॥ ६१
देवहूर्यज्ञ आ च वक्षत्सुम्नहूर्यज्ञ आ च वक्षत्। यक्षदग्निर्देवो देवाँ२ आ च वक्षत् ॥१३॥ ६२
वाजस्य मा प्रसव उद्ग्राभेणोदग्रभीत्। अधा सपत्नानिन्द्रो मे निग्राभेणाधराँ२ अकः ॥१४॥ ६३
उद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन्।
अधा सपत्नानिन्द्राग्नी मे विषूचीनान्व्यस्यताम् ॥१५॥ (५) ६४

क्रमध्वमग्निना नाकमुख्यꣳ हस्तेषु बिभ्रतः। दिवस्पृष्ठꣳ स्वर्गत्वा मिश्रा देवेभिराध्वम्॥१॥ ६५ [१०३३]

प्राचीमनु प्रदिशं प्रेहि विद्वानग्नेरग्ने पुरो अग्निर्भवेह ।
विश्वा आशा दीद्यानो विभाह्यूर्जं नो धेहि द्विपदे चतुष्पदे ॥२॥ ६६
पृथिव्या अहमुदन्तरिक्षमारुहमन्तरिक्षाद्दिवमारुहम् ।
दिवो नाकस्य पृष्ठात् स्वर्ज्योतिरगामहम् ॥३॥ ६७
स्वर्यन्तो नापेक्षन्त आ द्याᳪ रोहन्ति रोदसी ।
यज्ञं ये विश्वतोधारᳪ सुविद्वाᳪसो वितेनिरे ॥४॥ ६८
अग्ने प्रेहि प्रथमो देवयतां चक्षुर्देवानामुत मर्त्यानाम् ।
इयक्षमाणा भृगुभिः सजोषाः स्वर्यन्तु यजमानाः स्वस्ति ॥५॥ ६९
नक्तोषासा समनसा विरूपे धापयेते शिशुमेकᳪ समीची ।
द्यावाक्षामा रुक्मो अन्तर्विभाति देवा अग्निं धारयन् द्रविणोदाः ॥६॥ ७०
अग्ने सहस्राक्ष शतमूर्धञ्छतं ते प्राणाः सहस्रं व्यानाः ।
त्वᳪ साहस्रस्य राय ईशिषे तस्मै ते विधेम वाजाय स्वाहा ॥७॥ ७१
सुपर्णोऽसि गरुत्मान् पृष्ठे पृथिव्याः सीद ।
भासान्तरिक्षमापृण ज्योतिषा दिवमुत्तभान तेजसा दिश उद्दृᳪह ॥८॥ ७२
आजुह्वानः सुप्रतीकः पुरस्तादग्ने स्वं योनिमासीद साधुया ।
अस्मिन्त्सधस्थे अध्युत्तरस्मिन्विश्वे देवा यजमानश्च सीदत ॥९॥ ७३
ताᳪ सवितुर्वरेण्यस्य चित्रामाहं वृणे सुमतिं विश्वजन्याम् ।
यामस्य कण्वो अदुहत्प्रपीनाᳪ सहस्रधारां पयसा महीं गाम् ॥१०॥ ७४
विधेम ते परमे जन्मन्नग्ने विधेम स्तोमैरवरे सधस्थे ।
यस्माद्योनेरुदारिथा यजे तं प्र त्वे हवीᳪषि जुहुरे समिद्धे ॥११॥ ७५
प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ । त्वाᳪ शश्वन्त उपयन्ति वाजाः ॥१२॥ ७६
अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रᳪ हृदिस्पृशम् । ऋध्यामा त ओहैः ॥१३॥ ७७
चित्तिं जुहोमि मनसा घृतेन यथा देवा इहागमन्वीतिहोत्रा ऋतावृधः ।
पत्ये विश्वस्य भूमनो जुहोमि विश्वकर्मणे विश्वाहादाभ्यᳪ हविः ॥१४॥ ७८
सप्त ते अग्ने समिधः सप्त जिह्वाः सप्त ऋषयः सप्त धाम प्रियाणि ।
सप्त होत्राः सप्तधा त्वा यजन्ति सप्त योनीरापृणस्व घृतेन स्वाहा ॥१५॥ (६) ७९

शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्माᳪश्च । शुक्रश्च ऋतपाश्चात्यᳪहाः ॥१॥८० [१०७८]

ईदृङ् चान्यादृङ् चं सुदृङ् च प्रतिसदृङ् च । मितश्च संमितश्च सभराः ॥२॥ ८१
ऋतजिच्च सत्यजिच्च सेनजिच्च सुषेणश्च । अन्तिमित्रश्च दूरे अमित्रश्च गणः ॥३॥ ८२
ऋतश्च सत्यश्च ध्रुवश्च धरुणश्च । धर्ता च विधर्ता च विधारयः ॥४॥ ८३
ईदृक्षास एतादृक्षास ऊ षु णः सदृक्षासः प्रतिसदृक्षास एतन ।
मितासश्च संमितासो नो अद्य सभरसो मरुतो यज्ञे अस्मिन् ॥५॥ ८४
स्वतवाꣳश्च प्रघासी च सान्तपनश्च गृहमेधी च । क्रीडी च शाकी चोज्जेषी ॥६॥ ८५
इन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानोऽभवन्यथेन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानोऽभवन् ।
एवमिमं यजमानं दैवीश्च विशो मानुषीश्चानुवर्त्मानो भूयासुः ॥७॥ (७) ८६[१०८४]

अश्मन्नूर्जं पञ्चदश ॥१५॥ अग्निस्तिग्मेन नव ॥९॥ चक्षुषः पिता अष्ट ॥८॥ आयुः शिशानः सप्तदश॥१७॥
उदेनं पञ्चदश ॥१५॥ क्रमध्वमग्निना पञ्चदश ॥ १५ ॥ शुक्रज्योतिश्च सप्त ॥ ७॥
सप्तानुवाकेषु षडशीतिः ॥८६॥
इति शुक्लयजुःकाण्वसंहितायां अष्टादशोऽध्यायः ॥ १८ ॥

## अथैकोनविंशोऽध्यायः ।

इमꣳ स्तनमूर्जस्वन्तं धयापां प्रपीनमग्ने सरिरस्य मध्ये ।
उत्सं जुषस्व मधुमन्तमर्वन्त्समुद्रियꣳ सदनमाविशस्व ॥१॥ १
घृतं मिमिक्षे घृतमस्य योनिर्घृते श्रितो घृतम्वस्य धाम ।
अनुष्वधमावह मादयस्व स्वाहाकृतं वृषभ वक्षि हव्यम् ॥२॥ २
समुद्रादूर्मिर्मधुमाँ३ उदारदुपाꣳशुना सममृतत्वमानट् ।
घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः ॥३॥ ३
वयं नाम प्रब्रवामा घृतस्यास्मिन् यज्ञे धारयामा नमोभिः ।
उप ब्रह्मा शृणवच्छस्यमानं चतुःशृङ्गोऽवमीद्गौर एतत् ॥४॥ ४
चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य ।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ२ आविवेश ॥५॥ ५
त्रिधा हितं पणिभिर्गुह्यमानं गवि देवासो घृतमन्वविन्दन् ।
इन्द्र एकꣳ सूर्य एकं जजान वेनादेकꣳ स्वधया निष्टतक्षुः ॥६॥ ६[१०९०]
एता अर्षन्ति हृद्यात्समुद्राच्छतव्रजा रिपुणा नावचक्षे ।
घृतस्य धारा अभिचाकशीमि हिरण्ययो वेतसो मध्य आसाम् ।

सम्यक् स्रवन्ति सरितो न धेना अन्तर्हृदा मनसा पूयमानाः ।
एते अर्षन्त्यूर्मयो घृतस्य मृगा इव क्षिपणोरीषमाणाः ॥७॥ ७

सिन्धोरिव प्राध्वने शूघनासो वातप्रमियः पतयन्ति यह्वाः ।
घृतस्य धारा अरुषो न वाजी काष्ठा भिन्दन्नूर्मिभिः पिन्वमानः ॥८॥ ८

अभिप्रवन्त समनेव योषाः कल्याण्यः स्मयमानासो अग्निम् ।
घृतस्य धाराः समिधो नसन्त ता जुषाणो हर्यति जातवेदाः ॥९॥ ९

कन्या इव वहतुमेतवा उ अञ्ज्यञ्जाना अभिचाकशीमि ।
यत्र सोमः सूयते यत्र यज्ञो घृतस्य धारा अभि तत्पवन्ते ॥१०॥ १०

अभ्यर्षत सुष्टुतिं गव्यमाजिमस्मासु भद्रा द्रविणानि धत्त ।
इमं यज्ञं नयत देवता नो घृतस्य धारा मधुमत्पवन्ते ॥११॥ ११

धामं ते विश्वं भुवनमधि श्रितमन्तः समुद्रे हृद्यन्तरायुषि ।
अपामनीके समिथे य आभृतस्तमश्याम मधुमन्तं त ऊर्मिम् ॥१२॥ (१) १२

वाजश्च मे प्रसवश्च मे प्रयतिश्च मे प्रसितिश्च मे ।
धीतिश्च मे क्रतुश्च मे स्वरश्च मे श्लोकश्च मे ।
श्रावश्च मे श्रुतिश्च मे ज्योतिश्च मे स्वश्च मे यज्ञेन कल्पन्ताम् ॥१॥ १३

प्राणश्च मेऽपानश्च मे व्यानश्च मेऽसुश्च मे । चित्तं च म आधीतं च मे वाक् च मे मनश्च मे ।
चक्षुश्च मे श्रोत्रं च मे दक्षश्च मे बलं च मे यज्ञेन कल्पन्ताम् ॥२॥ १४

ओजश्च मे सहश्च म आत्मा च मे तनूश्च मे । शर्म च मे वर्म च मेऽङ्गानि च मेऽस्थीनि च मे ।
परूꣳषि च मे शरीराणि च म आयुश्च मे जरा च मे यज्ञेन कल्पन्ताम् ॥३॥ १५

ज्यैष्ठ्यं च म आधिपत्यं च मे मन्युश्च मे भामश्च मे ।
अमश्च मेऽम्भश्च मे जेमा च मे महिमा च मे वरिमा च मे प्रथिमा च मे वर्षिमा च मे द्राघिमा च मे ।
वृद्धं च मे वृद्धिश्च मे यज्ञेन कल्पन्ताम् ॥४॥ (२) १६

सत्यं च मे श्रद्धा च मे जगच्च मे धनं च मे । विश्वं च मे महश्च मे क्रीडा च मे मोदश्च मे ।
जातं च मे जनिष्यमाणं च मे सूक्तं च मे सुकृतं च मे यज्ञेन कल्पन्ताम् ॥१॥ १७

वित्तं च मे वेद्यं च मे भूतं च मे भविष्यच्च मे । सुगं च मे सुपथ्यं च म ऋद्धं च म ऋद्धिश्च मे ।
क्लृप्तं च मे क्लृप्तिश्च मे मतिश्च मे सुमतिश्च मे यज्ञेन कल्पन्ताम् ॥२॥ १८[११०१]

यन्ता च मे धर्ता च मे क्षेमश्च मे धृतिश्च मे। विश्वं च मे महश्च मे संविच्च मे ज्ञात्रं च मे।
सीरं च मे लयश्च मे ऋतश्च मे ग्रसश्च मे यज्ञेन कल्पन्ताम् ॥३॥ १९
शं च मे मयश्च मे प्रियं च मेऽनुकामश्च मे। कामश्च मे सौमनसश्च मे भगश्च मे द्रविणं च मे।
भद्रं च मे श्रेयश्च मे वसीयश्च मे यशश्च मे यज्ञेन कल्पन्ताम् ॥४॥ (३) २०

ऊर्क्च मे सूनृता च मे पयश्च मे रसश्च मे। घृतं च मे मधु च मे सग्धिश्च मे सपीतिश्च मे।
कृषिश्च मे वृष्टिश्च मे जैत्रं च म औद्भिद्यं च मे यज्ञेन कल्पन्ताम् ॥१॥ २१

ऋतं च मेऽमृतं च मेऽयक्ष्मं च मेऽनामयच्च मे।
जीवातुश्च मे दीर्घायुत्वं च मेऽनमित्रं च मेऽभयं च मे।
सुगं च मे शयनं च मे सूषा च मे सुदिनं च मे यज्ञेन कल्पन्ताम् ॥२॥ २२

रयिश्च मे रायश्च मे पुष्टं च मे पुष्टिश्च मे। विभु च मे प्रभु च मे पूर्णं च मे पूर्णतरं च मे।
कुयवं च मेऽक्षितं च मेऽन्नं च मेऽक्षुच्च मे यज्ञेन कल्पन्ताम् ॥३॥ २३
व्रीहयश्च मे यवाश्च मे माषाश्च मे तिलाश्च मे। मुद्गाश्च मे खल्वाश्च मे प्रियङ्गवश्च मेऽणवश्च मे।
श्यामाकाश्च मे नीवाराश्च मे गोधूमाश्च मे मसूराश्च मे यज्ञेन कल्पन्ताम् ॥४॥ (४) २४

अश्मा च मे मृत्तिका च मे गिरयश्च मे पर्वताश्च मे।
सिकताश्च मे वनस्पतयश्च मे हिरण्यं च मेऽयश्च मे।
सीसं च मे त्रपु च मे श्यामं च मे लोहं च मे यज्ञेन कल्पन्ताम् ॥१॥ २५
अग्निश्च म आपश्च मे वीरुधश्च म ओषधयश्च मे।
कृष्टपच्याश्च मेऽकृष्टपच्याश्च मे ग्राम्याश्च मे पशव आरण्याश्च मे।
वित्तं च मे वित्तिश्च मे भूतं च मे भूतिश्च मे यज्ञेन कल्पन्ताम् ॥२॥ २६
वसु च मे वसतिश्च मे कर्म च मे शक्तिश्च मे।
अर्थश्च म एमश्च म इत्या च मे गतिश्च मे यज्ञेन कल्पन्ताम् ॥३॥ (५) २७

अग्निश्च म इन्द्रश्च मे सोमश्च म इन्द्रश्च मे।
सविता च म इन्द्रश्च मे सरस्वती च म इन्द्रश्च मे।
पूषा च म इन्द्रश्च मे बृहस्पतिश्च म इन्द्रश्च मे यज्ञेन कल्पन्ताम् ॥१॥ २८
मित्रश्च म इन्द्रश्च मे वरुणश्च म इन्द्रश्च मे। धाता च म इन्द्रश्च मे त्वष्टा च म इन्द्रश्च मे।
मरुतश्च म इन्द्रश्च मे विश्वे च मे देवा इन्द्रश्च मे यज्ञेन कल्पन्ताम् ॥२॥ २९[११३]

पृथिवी च म इन्द्रश्च मेऽन्तरिक्षं च म इन्द्रश्च मे । द्यौश्च म इन्द्रश्च मे समाश्च म इन्द्रश्च मे ।
नक्षत्राणि च म इन्द्रश्च मे दिशश्च म इन्द्रश्च मे यज्ञेन कल्पन्ताम् ॥३॥ (६) ३०

अꣳशुश्च मे रश्मिश्च मेऽदाभ्यश्च मेऽधिपतिश्च मे ।
उपाꣳशुश्च मेऽन्तर्यामश्च म ऐन्द्रवायवश्च मे मैत्रावरुणश्च मे ।
आश्विनश्च मे प्रतिप्रस्थानश्च मे शुक्रश्च मे मन्थी च मे यज्ञेन कल्पन्ताम् ॥१॥ ३१

आग्रयणश्च मे वैश्वदेवश्च मे ध्रुवश्च मे वैश्वानरश्च मे ।
ऐन्द्राग्नश्च मे महावैश्वदेवश्च मे मरुत्वतीयाश्च मे निष्केवल्यश्च मे ।
सावित्रश्च मे सारस्वतश्च मे पात्नीवतश्च मे हारियोजनश्च मे यज्ञेन कल्पन्ताम् ॥२॥ ३२

स्रुचश्च मे चमसाश्च मे वायव्यानि च मे द्रोणकलशश्च मे ।
ग्रावाणश्च मेऽधिषवणे च मे पूतभृच्च म आधवनीयश्च मे ।
वेदिश्च मे बर्हिश्च मे स्वगाकारश्च मेऽवभृथश्च मे यज्ञेन कल्पन्ताम् ॥३॥ ३३

अग्निश्च मे घर्मश्च मेऽर्कश्च मे सूर्यश्च मे । प्राणश्च मेऽश्वमेधश्च मे पृथिवी च मेऽदितिश्च मे ।
दितिश्च मे द्यौश्च मेऽङ्गुलयः शक्वरयो दिशश्च मे यज्ञेन कल्पन्ताम् ॥४॥ ३४

व्रतं च म ऋतवश्च मे संवत्सरश्च मे तपश्च मे ।
अहोरात्रे ऊर्वष्ठीवे बृहद्रथन्तरे च मे यज्ञेन कल्पन्ताम् ॥५॥ (७) ३५

एका च मे तिस्रश्च मे तिस्रश्च मे पञ्च च मे पञ्च च मे सप्त च मे सप्त च मे नव च मे
नव च म एकादश च म एकादश च मे त्रयोदश च मे त्रयोदश च मे ।
पञ्चदश च मे पञ्चदश च मे सप्तदश च मे सप्तदश च मे नवदश च मे नवदश च म
एकविꣳशतिश्च म एकविꣳशतिश्च मे त्रयोविꣳशतिश्च मे त्रयोविꣳशतिश्च मे ।
पञ्चविꣳशतिश्च मे पञ्चविꣳशतिश्च मे सप्तविꣳशतिश्च मे सप्तविꣳशतिश्च मे नवविꣳशतिश्च मे
नवविꣳशतिश्च म एकत्रिꣳशच्च म एकत्रिꣳशच्च मे त्रयस्त्रिꣳशच्च मे यज्ञेन कल्पन्ताम् ॥१॥ ३६
चतस्रश्च मेऽष्टौ च मेऽष्टौ च मे द्वादश च मे द्वादश च मे षोळश च मे षोळश च मे विꣳशतिश्च मे
विꣳशतिश्च मे चतुर्विꣳशतिश्च मे चतुर्विꣳशतिश्च मेऽष्टाविꣳशतिश्च मेऽष्टाविꣳशतिश्च मे ।
द्वात्रिꣳशच्च मे द्वात्रिꣳशच्च मे षट्त्रिꣳशच्च मे षट्त्रिꣳशच्च मे चत्वारिꣳशच्च मे चत्वारिꣳशच्च मे
चतुश्चत्वारिꣳशच्च मे चतुश्चत्वारिꣳशच्च मेऽष्टाचत्वारिꣳशच्च मे यज्ञेन कल्पन्ताम् ॥२॥ ३७[११२१]

त्र्यविश्च मे त्र्यवी च मे दित्यवाट् च मे दित्यौही च मे ।
पञ्चाविश्च मे पञ्चावी च मे त्रिवत्सश्च मे त्रिवत्सा च मे ।
तुर्यवाट् च मे तुर्यौही च मे यज्ञेन कल्पन्ताम् ॥३॥ ३८
पष्ठवाट् च मे पष्ठौही च म उक्षा च मे वशा च मे ।
ऋषभश्च मे वेहच्च मेऽनड्वाꣳश्च मे धेनुश्च मे यज्ञेन कल्पन्ताम् ॥४॥ (८) ३९

वाजाय स्वाहा प्रसवाय स्वाहापिजाय स्वाहा क्रतवे स्वाहा । वसवे स्वाहाहर्पतये स्वाहा ।
अह्ने मुग्धाय स्वाहा मुग्धाय वैनꣳशिनाय स्वाहा विनꣳशिन आन्त्यायनाय स्वाहान्त्याय
भौवनाय स्वाहा भुवनस्य पतये स्वाहाधिपतये स्वाहा प्रजापतये स्वाहा ॥१॥ ४०
इयं ते राण्मित्राय यन्तासि यमनः । ऊर्जे त्वा वृष्ट्यै त्वा प्रजानां त्वाधिपत्याय ॥२॥ ४१
आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतां चक्षुर्यज्ञेन कल्पताꣳ श्रोत्रं यज्ञेन कल्पताम् ।
वाग्यज्ञेन कल्पतां मनो यज्ञेन कल्पतामात्मा यज्ञेन कल्पतां पृष्ठं यज्ञेन कल्पताम् ।
ब्रह्म यज्ञेन कल्पतां यज्ञो यज्ञेन कल्पतां ज्योतिर्यज्ञेन कल्पताꣳ स्वर्यज्ञेन कल्पताम् ॥३॥ ४२
स्तोमश्च यजुश्च ऋक् च साम च बृहच्च रथन्तरं च ।
स्वर्देवा अगन्मामृता अभूम प्रजापतेः प्रजा अभूम वेट् स्वाहा ॥३॥ (९) ४३ [११२७]

इयं स्तनं द्वादश ॥१२॥ वाजश्चतस्रः ॥४॥ सत्यं चतस्रः ॥४॥ ऊर्क्च चतस्रः ॥४॥ अश्मा च तिस्रः॥३॥
द्वितीयोऽग्निश्च तिस्रः ॥३॥ अंशुः पञ्च ॥५॥ एका चतस्रः ॥४॥ वाजाय चतस्रः ॥४॥
नवानुवाकेषु त्रयश्चत्वारिंशत् ॥४३॥ देन स

इति शुक्लयजुःकाण्वसंहितायां एकोनविंशोऽध्यायः ॥१९॥

## अथ विंशोऽध्यायः ।

वाजस्य नु प्रसवे मातरं महीमदितिं नाम वचसा करामहे ।
यस्यामिदं विश्वं भुवनमाविवेश तस्यां नो देवः सविता धर्म साविषक् ॥१॥ १
विश्वे अद्य मरुतो विश्व ऊती विश्वे भवन्त्वग्नयः समिद्धाः ।
विश्वे नो देवा अवसागमन्तु विश्वमस्तु द्रविणं वाजो अस्मे ॥२॥ २
वाजो नः सप्त प्रदिशश्चतस्रो वा परावतः । वाजो नो विश्वैर्देवैर्धनसाता इहावतु ॥३॥ ३
वाजो नो अद्य प्रसुवाति दानं वाजो देवाँ३ ऋतुभिः कल्पयाति ।
वाजो हि मा सर्ववीरं चकार सर्वा आशा वाजपतिर्भवेयम् ॥४॥ ४ [११३१]

वाजः पुरस्तादुत मध्यतो नो वाजो देवान् हविषा वर्धयाति ।
वाजो हि मा सर्ववीरं चकार विश्वा आशा वाजपतिर्जयेयम् ॥५॥ ५
सं मा सृजामि पयसा पृथिव्याः संमा सृजाम्यद्भिरोषधीभिः । सोऽहं वाजꣳ सनेयमग्ने ॥६॥ ६
पयः पृथिव्यां पय ओषधीषु पयो दिव्यन्तरिक्षे पयोधाः ।
पयस्वतीः प्रदिशः सन्तु मह्यम् । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ।
सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेः साम्राज्येनाभिषिञ्चामि ॥७॥ (१) ७

ऋताषाळृतधामाग्निर्गन्धर्वः । तस्यौषधयोऽप्सरसो मुदो नाम ।
स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहा ॥१॥ ८
सꣳहितो विश्वसामा सूर्यो गन्धर्वः । तस्य मरीचयोऽप्सरस आयुवो नाम ।
स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहा ॥२॥ ९
सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वः । तस्य नक्षत्राण्यप्सरसो भेकुरयो नाम ।
स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहा ॥३॥ १०
इषिरो विश्वव्यचा वातो गन्धर्वः । तस्यापो अप्सरस ऊर्जो नाम ।
स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहा ॥४॥ ११
भुज्युः सुपर्णो यज्ञो गन्धर्वः । तस्य दक्षिणा अप्सरसस्तावा नाम ।
स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहा ॥५॥ १२
प्रजापतिर्विश्वकर्मा मनो गन्धर्वः । तस्य ऋक्सामान्यप्सरस एष्टयो नाम ।
स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहा ॥६॥ १३
स नो भुवनस्य पते प्रजापते यस्य त उपरि गृहा यस्य वेह ।
अस्मै ब्रह्मणेऽस्मै क्षत्राय महि शर्म यच्छ स्वाहा ॥७॥ १४
समुद्रोऽसि नभस्वानार्द्रदानुः शम्भूर्मयोभूरभि मा वाहि स्वाहा ।
मारुतोऽसि मरुतां गणः शम्भूर्मयोभूरभि मा वाहि स्वाहा ।
अवस्यूरसि दुवस्वाञ्छम्भूर्मयोभूरभि मा वाहि स्वाहा । ॥८॥ १५
यास्ते अग्ने सूर्ये रुचो दिवमातन्वन्ति रश्मिभिः ।
ताभिर्नो अद्य सर्वाभी रुचे जनाय नस्कृधि ॥९॥ १६
या वो देवाः सूर्ये रुचो गोष्वश्वेषु या रुचः ।
इन्द्राग्नी ताभिः सर्वाभी रुचं नो धत्त बृहस्पते ॥१०॥ १७ [११४४]

रुचं नो धेहि ब्राह्मणेषु रुच५ राजसु नस्कृधि ।
रुचं विश्येषु शूद्रेषु मयि धेहि रुचा रुचम् ॥११॥ १८
तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ।
अहेळमानो वरुणेह बोध्युरुश५स मा न आयुः प्रमोषीः ॥१२॥ १९
स्वर्ण घर्मः स्वाहा स्वर्णार्कः स्वाहा स्वर्ण शुक्रः स्वाहा ।
स्वर्ण ज्योतिः स्वाहा स्वर्ण सूर्यः स्वाहा ॥१३॥ (२) २०

अग्निं युनज्मि शवसा घृतेन दिव्य५ सुपर्णं वयसा बृहन्तम् ।
तेन गमेम ब्रध्नस्य विष्टप५ स्वो रुहाणा अधि नाकमुत्तमम् ॥१॥ २१
इमौ ते पक्षा अजरौ पतत्रिणो याभ्या५ रक्षा५स्यपह५स्यग्ने ।
ताभ्यां पतेम सुकृतामु लोकं यत्र ऋषयो जग्मुः प्रथमजाः पुराणाः ॥२॥ २२
इन्दुर्दक्षः श्येन ऋतावा हिरण्यपक्षः शकुनो भुरण्युः ।
महान्त्सधस्थे ध्रुव आ निषत्तो नमस्ते अस्तु मा मा हि५सीः ॥३॥ २३
दिवो मूर्धासि पृथिव्या नाभिरूर्गपामोषधीनाम् ।
विश्वायुः शर्म सप्रथा नमस्पथे ॥४॥ २४
विश्वस्य मूर्धन्नधि तिष्ठसि श्रितः समुद्रे ते हृदयमप्स्वायुरपो दत्तोदधिं भिन्त ।
दिवस्पर्जन्यादन्तरिक्षात्पृथिव्यास्ततो नो वृष्ट्याव ॥५॥ २५
इष्टो यज्ञो भृगुभिराशीर्दा वसुभिः । तस्य न इष्टस्य प्रीतस्य द्रविणेहागमेः ॥६॥ २६
इष्टो अग्निराहुतः पिपर्तु न इष्ट५ हविः । स्वगेदं देवेभ्यो नमः ॥७॥ (३) २७

यदाकूतात्समसुस्रोद्धृदो वा मनसो वा संभृतं चक्षुषो वा ।
तदनु प्रेत सुकृतामु लोकं यत्र ऋषयो जग्मुः प्रथमजाः पुराणाः ॥१॥ २८
एत५ सधस्थ परि ते ददामि यमावहाच्छेवधिं जातवेदाः ।
अन्वागन्ता यज्ञपतिर्वो अत्र त५ स्म जानीत परमे व्योमन् ॥२॥ २९
एतं जानाथ परमे व्योमन्देवाः सधस्था विद रूपमस्य ।
यदागच्छात्पथिभिर्देवयानैरिष्टापूर्ते कृणवथाविरस्मै ॥३॥ ३०
उद्बुध्यस्वाग्ने प्रति जागृहि त्वमिष्टापूर्ते स५सृजेथामयं च ।
अस्मिन्त्सधस्थे अध्युत्तरस्मिन्विश्वे देवा यजमानश्च सीदत ॥४॥ ३१ [११५८]

येन वहसि सहस्रं येनाग्ने सर्ववेदसम् । तेनेमं यज्ञं नो नय स्वर्देवेषु गन्तवे ॥५॥ ३२
प्रस्तरेण परिधिना स्रुचा वेद्या च बर्हिषा । ऋचेमं यज्ञं नो नय स्वर्देवेषु गन्तवे ॥६॥ ३३
यद्दत्तं यत्परादानं यत्पूर्तं याश्च दक्षिणाः । तदग्निर्वैश्वकर्मणः स्वर्देवेषु नो दधत् ॥७॥ ३४
यत्र धारा अनपेता मधोर्घृतस्य च याः । तदग्निर्वैश्वकर्मणः स्वर्देवेषु नो दधत् ॥८॥ ३५
ये अग्नयः पाञ्चजन्या अस्यां पृथिव्यामधि । तेषामसि त्वमुत्तमः प्र नो जीवातवे सुव॥९॥(४)३६

वार्त्रहत्याय शवसे पृतनाषाह्याय च । इन्द्र त्वावर्तयामसि ॥१॥ ३७
सहदानुं पुरुहूत क्षियन्तमहस्तमिन्द्र संपिणक् कुणारुम् ।
अभि वृत्रं वर्धमानं पियारुमपादमिन्द्र तवसा जघन्थ ॥२॥ ३८
वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः ।
यो अस्माँ३ अभिदासत्यधरं गमया तमः ॥३॥ ३९
मृगो न भीमः कुचरो गिरिष्ठाः परावत आजगन्था परस्याः ।
सृकꣳ सꣳशाय पविमिन्द्र तिग्मं वि शत्रून्ताळ्हि वि मृधो नुदस्व ॥४॥ ४०
वैश्वानरो न ऊतय आ प्र यातु परावतः । अग्निर्नः सुष्टुतीरुप ॥५॥ ४१
पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीरा विवेश ।
वैश्वानरः सहसा पृष्टो अग्निः स नो दिवा स रिषस्पातु नक्तम् ॥६॥ ४२
अश्याम तं काममग्ने तवोती अश्याम रयिꣳ रयिवः सुवीरम् ।
अश्याम वाजमभि वाजयन्तोऽश्याम द्युम्नमजराजरं ते ॥७॥ ४३
वयं ते अद्य ररिमा हि काममुत्तानहस्ता नमसोपसद्य ।
यजिष्ठेन मनसा यक्षि देवानस्रेधता मन्मना विप्रो अग्ने ॥८॥ ४४
धामच्छदग्निरिन्द्रो ब्रह्मा देवो बृहस्पतिः ।
सचेतसो विश्वे देवा यज्ञं प्रावन्तु नः शुभे ॥९॥ ४५
त्वं यविष्ठ दाशुषो नॄꣳः पाहि शृणुधी गिरः । रक्षा तोकमुत त्मना ॥१०॥(५)४६ [११७३]

याजस्यनु सप्त॥७॥ ऋतापाद् त्रयोदश ॥१३॥ अग्निं युनज्मि सप्त ॥७॥ यदाकूतान्नव ॥९॥ वार्त्रहत्याय दश॥१०
पञ्चानुवाकेषु षट्चत्वारिंशत् ॥४६॥ प्राणाद्याः

॥ इति शुक्लयजुःकाण्वसंहितायां विंशोऽध्यायः ॥ २० ॥

॥ इति द्वितीयो दशकः ॥ २ ॥

॥ अथ तृतीयो दशकः ॥ ३ ॥

## एकविंशोऽध्यायः ।

स्वाद्वीं त्वा स्वादुना तीव्रां तीव्रेणामृतांमृमृतेन ।
मधुमतीं मधुमता सृजामि सꣳ सोमेन ।
सोमोऽस्यश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्व ॥१॥ १
परीतो षिञ्चता सुतꣳ सोमो य उत्तमꣳ हविः ।
दधन्वा यो नर्यो अप्स्वन्तरा सुषाव सोममद्रिभिः ॥२॥ २
वायोः पूतः पवित्रेण प्राङ्क्सोमो अतिद्रुतः । इन्द्रस्य युज्यः सखा ।
वायोः पूतः पवित्रेण प्रत्यङ्क्सोमो अतिद्रुतः । इन्द्रस्य युज्यः सखा ॥३॥ ३
पुनाति ते परिस्रुतꣳ सोमꣳ सूर्यस्य दुहिता । वारेण शश्वता तना ॥४॥ ४
ब्रह्म क्षत्रं पवते तेज इन्द्रियꣳ सुरया सोमः सुत आसुतो मदाय ।
शुक्रेण देव देवताः पिपृग्धि रसेनान्नं यजमानाय धेहि ।
कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूय ।
इहेहैषां कृणुहि भोजनानि ये बर्हिषो नम उक्तिं न जग्मुः ।
उपयामगृहीतोऽस्यश्विभ्यां त्वा सरस्वत्यै त्वेन्द्राय त्वा सुत्राम्णे ।
एष ते योनिस्तेजसे त्वा वीर्याय त्वा बलाय त्वा ॥५॥ ५
नाना हि वां देवहितꣳ सदस्कृतं मा सꣳ सृक्षाथां परमे व्योमन् ।
सुरा त्वमसि शुष्मिणी सोम एष मा मा हिꣳसीः स्वां योनिमाविशन्ती ॥६॥ ६
उपयामगृहीतोऽस्याश्विनं तेजः सारस्वतं वीर्यमैन्द्रं बलम् ।
एष ते योनिर्मोदाय त्वानन्दाय त्वा महसे त्वा ॥७॥ ७
तेजोऽसि तेजो मयि धेहि वीर्यमसि वीर्यं मयि धेहि
बलमसि बलं मयि धेह्योजोऽस्योजो मयि धेहि ।
मन्युरसि मन्युं मयि धेहि सहोऽसि सहो मयि धेहि ॥८॥ ८
या व्याघ्रं विषूचिकोभौ वृकं च रक्षति ।
श्येनं पतत्रिणꣳ सिꣳहꣳ सेमं पात्वꣳहसः ॥९॥ ९
यदापिपेष मातरं पुत्रः प्रमुदितो धयन् ।
एतत्तदग्ने अनृणो भवाम्यहतौ पितरौ मया ॥१०॥ १० [११८३]

संपृचं स्थ सं मा भद्रेण पृङ्क्त । विपृचं स्थ वि मा पापेन पृङ्क्त ॥११॥ (१) ११

देवा यज्ञमतन्वत भेषजं भिषजाश्विना ।
वाचा सरस्वती भिषगिन्द्रायेन्द्रियाणि दधतः ॥१॥ १२

दीक्षायै रूपꣳ शष्पाणि प्रायणीयस्य तोक्मानि ।
क्रयस्य रूपꣳ सोमस्य लाजाः सोमाꣳशवो मधु ॥२॥ १३

आतिथ्यरूपं मासरं महावीरस्य नग्नहुः ।
रूपमुपसदामेतत्तिस्रो रात्रीः सुरासुता ॥३॥ १४

सोमस्य रूपं क्रीतस्य परिस्रुत्परि षिच्यते ।
अश्विभ्यां दुग्धं भेषजमिन्द्रायैन्द्रꣳ सरस्वत्या ॥४॥ १५

आसन्दी रूपꣳ राजासन्द्यै वेद्यै कुम्भी सुराधानी ।
अन्तर उत्तरवेद्या रूपं कारोतरो भिषक् ॥५॥ १६

वेद्या वेदिः समाप्यते बर्हिषा बर्हिरिन्द्रियम् ।
यूपेन यूप आप्यते प्रणीतो अग्निरग्निना ॥६॥ १७

हविर्धानं यदश्विनाग्नीध्रं यत्सरस्वती ।
इन्द्रायैन्द्रꣳ सदस्कृतं पत्नीशालं गार्हपत्यः ॥७॥ १८

प्रैषेभिः प्रैषानाप्नोत्याप्रीभिराप्रीर्यज्ञस्य ।
प्रयाजेभिरनुयाजान्वषट्कारेभिराहुतीः ॥८॥ १९

पशुभिः पशूनाप्नोति पुरोडाशैर्हवीꣳष्या ।
छन्दोभिः सामिधेनीर्याज्याभिर्वषट्कारान् ॥९॥ २०

धानाः करम्भः सक्तवः परीवापः पयो दधि ।
सोमस्य रूपꣳ हविष आमिक्षा वाजिनं मधु ॥१०॥ २१

धानानाꣳ रूपं कुवलं परीवापस्य गोधूमाः ।
सक्तूनाꣳ रूपं बदरमुपवाकाः करम्भस्य ॥११॥ २२

पयसो रूपं यद्यवा दध्नो रूपं कर्कन्धूनि ।
सोमस्य रूपं वाजिनꣳ सौम्यस्य रूपमामिक्षा ॥१२॥ २३

आश्रावयेति स्तोत्रियाः प्रत्याश्रावो अनुरूपः ।
यजेति धाय्यारूपं प्रगाथा येयजामहाः ॥१३॥ २४ [११९७]

अर्धं ऋचैरुक्थानाꣳ रूपं पदैराप्नोति निविदः ।
प्रणवैः शस्त्राणाꣳ रूपं पयसा सोम आप्यते ॥१४॥ २५
अश्विभ्यां प्रातःसवनमिन्द्रेणैन्द्रं माध्यंदिनम् ।
वैश्वदेवꣳ सरस्वत्या तृतीयमाप्तꣳ सवनम् ॥१५॥ २६
वायव्यैर्वायव्यान्याप्नोति सतेन द्रोणकलशम् ।
कुम्भीभ्यामम्भृणौ सुते स्थालीभिः स्थालीराप्नोति ॥१६॥ २७
यजुर्भिराप्यन्ते ग्रहा ग्रहैः स्तोमाश्च विष्टुतीः ।
छन्दोभिरुक्थाशस्त्राणि साम्नावभृथ आप्यते ॥१७॥ २८
इडाभिर्भक्षानाप्नोति सूक्तवाकेनाशिषः ।
शंयुना पत्नीसंयाजान्त्समिष्टयजुषा सꣳस्थाम् ॥१८॥ २९
व्रतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम् ।
दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते ॥१९॥ ३०
एतावद्रूपं यज्ञस्य यद्देवैर्ब्रह्मणा कृतम् । तदेतत्सर्वमाप्नोति यज्ञे सौत्रामणी सुते ॥२०॥(२) ३१

सुरावन्तं बर्हिषदꣳ सुवीरं यज्ञꣳ हिन्वन्ति महिषा नमोभिः ।
दधानाः सोमं दिवि देवतासु मदेमेन्द्रं यजमानाः स्वर्काः ॥१॥ ३२
यस्ते रसः संभृत ओषधीषु सोमस्य शुष्मः सुरया सुतस्य ।
तेन जिन्व यजमानं मदेन सरस्वतीमश्विना इन्द्रमग्निम् ॥२॥ ३३
यमश्विना नमुचेरासुरादधि सरस्वत्यसुनोदिन्द्रियाय ।
इमं तꣳ शुक्रं मधुमन्तमिन्दुꣳ सोमꣳ राजानमिह भक्षयामि ॥३॥ ३४
यदत्र रिप्तꣳ रसिनः सुतस्य यदिन्द्रो अपिबच्छचीभिः ।
अहं तदस्य मनसा शिवेन सोमꣳ राजानमिह भक्षयामि ॥४॥ ३५
पितृभ्यः स्वधायिभ्यः स्वधा नमः पितामहेभ्यः स्वधायिभ्यः स्वधा नमः ।
प्रपितामहेभ्यः स्वधायिभ्यः स्वधा नमः ॥ ५ ॥ ३६
अक्षन् पितरोऽमीमदन्त पितरोऽतीतृपन्त पितरः । पितरः शुन्धध्वम् ॥६॥ ३७
पुनन्तु मा पितरः सोम्यासः पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः ।
पवित्रेण शतायुषा ॥७॥ ३८
पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः । पवित्रेण शतायुषा विश्वमायुर्व्यश्नवै ॥८॥ ३९

अग्न आयूꣳषि पवस आ सुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनाम् ॥९॥ ४०
पुनन्तु मा देवजनाः पुनन्तु मनसा धियः । पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा॥१०॥४१
पवित्रेण पुनीहि मा शुक्रेण देव दीद्यत् । अग्ने क्रत्वा क्रतूꣳरनु ॥११॥ ४२
यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा । ब्रह्म तेन पुनातु मा ॥१२॥ ४३
पवमानः सो अद्य नः पवित्रेण विचर्षणिः । यः पोता स पुनातु मा ॥१३॥ ४४
उभाभ्यां देव सवितः पवित्रेण सवेन च । मां पुनीहि विश्वतः ॥१४॥ ४५
वैश्वदेवी पुनती देव्यागाद्यस्यामिमा बह्व्यस्तन्वो वीतपृष्ठाः ।
तया मदन्तः सधमादेषु वयꣳ स्याम पतयो रयीणाम् ॥१५॥ ४६
ये समानाः समनसः पितरो यमराज्ये ।
तेषाँल्लोकः स्वधा नमो यज्ञो देवेषु कल्पताम् ॥१६॥ ४७
ये समानाः समनसो जीवा जीवेषु मामकाः ।
तेषाꣳ श्रीर्मयि कल्पतामस्मिँल्लोके शतꣳ समाः ॥१७॥ ४८
द्वे सृती अशृणवं पितॄणामहं देवानामुत मर्त्यानाम् ।
ताभ्यामिदं विश्वमेजत्समेति यदन्तरा पितरं मातरं च ॥१८॥ ४९
इदꣳ हविः प्रजननं मे अस्तु दशवीरꣳ सर्वगणꣳ स्वस्तये ।
आत्मसनि प्रजासनि पशुसनि लोकसन्यभयसनि ।
अग्निः प्रजां बहुलां मे करोत्वन्नं पयो रेतो अस्मासु धत्त ॥१९ (३) ५०

उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः ।
असुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु ॥१॥ ५१
त्वꣳ सोम प्रचिकितो मनीषा त्वꣳ रजिष्ठमनु नेषि पन्थाम् ।
तव प्रणीती पितरो न इन्दो देवेषु रत्नमभजन्त धीराः ॥२॥ ५२
त्वया हि नः पितरः सोम पूर्वे कर्माणि चक्रुः पवमान धीराः ।
वन्वन्नवातः परिधीꣳरपोर्णु वीरेभिरश्वैर्मघवा भवा नः ॥३॥ ५३
त्वꣳ सोमꣳ पितृभिः संविदानोऽनु द्यावापृथिवी आ ततन्थ ।
तस्मै त इन्दो हविषा विधेम वयꣳ स्याम पतयो रयीणाम् ॥४॥ ५४
बर्हिषदः पितर ऊत्यर्वागिमा वो हव्या चकृमा जुषध्वम् ।
त आ गतावसा शन्तमेनाथा नः शं योररपो दधात ॥५॥ ५५ [१२२८]

उपहूताः पितरः सोम्यासो बर्हिष्येषु निधिषु प्रियेषु ।
त आ गमन्तु त इह श्रुवन्त्वधि ब्रुवन्तु तेऽवन्त्वस्मान् ॥६॥ ५६
आहं पितॄन्त्सुविदत्राँ२ अवित्सि नपातं च विक्रमणं च विष्णोः ।
बर्हिषदो ये स्वधया सुतस्य भजन्त पित्वस्त इहागमिष्ठाः ॥७॥ ५७
अग्निष्वात्ताः पितर एह गच्छत सदःसदः सदत सुप्रणीतयः ।
अत्ता हवीꣳषि प्रयतानि बर्हिष्यथा रयिꣳ सर्ववीरं दधातन ॥८॥ ५८
आ यन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः
अस्मिन् यज्ञे स्वधया मदन्तोऽधि ब्रुवन्तु तेऽवन्त्वस्मान् ॥९॥ ५९
ये अग्निष्वात्ता ये अनग्निष्वात्ता मध्ये दिवः स्वधया मादयन्ते ।
तेभ्यः स्वराळसुनीतिमेतां यथावशं तन्वं कल्पयाति ॥१०॥ ६०
अग्निष्वात्तानृतुमतो हवामहे नाराशꣳसे सोमपीथं य आशुः ।
ते नो विप्रासः सुहवा भवन्तु वयꣳ स्याम पतयो रयीणाम् ॥११॥ ६१
आच्या जानु दक्षिणतो निषद्येमं यज्ञमभि गृणीत विश्वे ।
मा हिꣳसिष्ट पितरः केन चिन्नो यद्व आगः पुरुषता कराम ॥१२॥ ६२
आसीनासो अरुणीनामुपस्थे रयिं धत्त दाशुषे मर्त्याय ।
पुत्रेभ्यः पितरस्तस्य वस्वः प्र यच्छत त इहोर्जं दधात ॥१३॥ ६३
यमग्ने कव्यवाहन त्वं चिन्मन्यसे रयिम् । तन्नो गीर्भिः श्रवाय्यं देवत्रा पनया युजम् ॥१४॥ ६४
यो अग्निः कव्यवाहनः पितॄन्यक्षदृतावृधः । प्रेदु हव्यानि वोचति देवेभ्यश्च पितृभ्य आ॥१५॥६५
त्वमग्न ईळितो जातवेदो वाड्ढव्यानि सुरभीणि कृत्वी ।
प्रादाः पितृभ्यः स्वधया ते अक्षन्नद्धि त्वं देव प्रयता हवींꣳषि ॥१६॥ ६६
इदं पितृभ्यो नमो अस्त्वद्य ये पूर्वासो य उपरास ईयुः ।
ये पार्थिवे रजस्या निषत्ता ये वा नूनꣳ सुवृजनासु विक्षु ॥१७॥ ६७
ये चेह पितरो ये च नेह याꣳश्च विद्म याँ२ उ च न प्रविद्म ।
त्वं वेत्थ यति ते जातवेदः स्वधाभिर्यज्ञꣳ सुकृतं जुषस्व ॥१८॥ ६८
अधा यथा नः पितरः परासः प्रत्नासो अग्न ऋतमाशुषाणाः ।
शुचीदयन्दीधितिमुक्थशासः क्षामा भिन्दन्तो अरुणीरप व्रन् ॥१९॥ ६९
उशन्तस्त्वा नि धीमह्युशन्तः समिधीमहि ।
उशन्नुशत आ वह पितॄन् हविषे अत्तवे ॥२०॥ ७० [१२८३]

अपां फेनेन नमुचेः शिर इन्द्रोदवर्तयः । विश्वा यदजय स्पृधः ॥२१॥ (४) ७१

सोमो राजामृतं सुत ऋजीषेणाजहान्मृत्युम् ।
ऋतेन सत्यमिन्द्रियं विपानं शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ॥१॥ ७२
अद्भ्यः क्षीरं व्यपिबत् क्रुङ्ङाङ्गिरसो धिया ।
ऋतेन सत्यमिन्द्रियं विपानं शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ।
सोममद्भ्यो व्यपिबच्छन्दसा हंसः शुचिषत् ।
ऋतेन सत्यमिन्द्रियं विपानं शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ।
अन्नात्परिस्रुतो रसं ब्रह्मणा व्यपिबत् क्षत्रं पयः सोमं प्रजापतिः ।
ऋतेन सत्यमिन्द्रियं विपानं शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ॥२॥ ७३
रेतो मूत्रं वि जहाति योनिं प्रविशदिन्द्रियम् ।
गर्भो जरायुणावृत उल्बं जहाति जन्मना ।
ऋतेन सत्यमिन्द्रियं विपानं शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ॥३॥ ७४
दृष्ट्वा रूपे व्याकरोत् सत्यानृते प्रजापतिः ।
अश्रद्धामनृते दधाच्छ्रद्धां सत्ये प्रजापतिः ।
ऋतेन सत्यमिन्द्रियं विपानं शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ॥४॥ ७५
वेदेन रूपे व्यपिबत् सुतासुतौ प्रजापतिः ।
ऋतेन सत्यमिन्द्रियं विपानं शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ।
दृष्ट्वा परिस्रुतो रसं शुक्रेण शुक्रं व्यपिबत्पयः सोमं प्रजापतिः ।
ऋतेन सत्यमिन्द्रियं विपानं शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ॥५॥ (५) ७६

सीसेन तन्त्रं मनसा मनीषिण ऊर्णासूत्रेण कवयो वयन्ति ।
अश्विना यज्ञं सविता सरस्वतीन्द्रस्य रूपं वरुणो भिषज्यन् ॥१॥ ७७
तदस्य रूपममृतं शचीभिस्तिस्रो दधुर्देवताः संरराणाः ।
लोमानि शष्पैर्बहुधा न तोक्मभिस्त्वगस्य मांसमभवन्न लाजाः ॥२॥ ७८
तदश्विना भिषजा रुद्रवर्तनी सरस्वती वयति पेशो अन्तरम् ।
अस्थि मज्जानं मासरैः कारोतरेण दधतो गवां त्वचि ॥३॥ ७९
सरस्वती मनसा पेशलं वसु नासत्याभ्यां वयति दर्शतं वपुः ।
रसं परिस्रुता न रोहितं नग्नहुर्धीरस्तसरं न वेम ॥४॥ ८० [१२५३]

पयसा शुक्रममृतं जनित्र सुरया मूत्राज्जनयन्त रेतः ।
अपामतिं दुर्मतिं बाधमाना ऊवध्यं वातं सब्वं तदारात् ॥५॥ ८१
इन्द्रः सुत्रामा हृदयेन सत्यं पुरोडाशेन सविता जजान ।
यकृत् क्लोमानं वरुणो भिषज्यन् मतस्ने वायव्यैर्न मिनाति पित्तम् ॥६॥ ८२
आन्त्राणि स्थालीर्मधु पिन्वमाना गुदाः पात्राणि सुदुघा न धेनुः ।
श्येनस्य पत्रं न प्लीहा शचीभिरासन्दी नाभिरुदरं न माता ॥७॥ ८३
कुम्भो वनिष्ठुर्जनिता शचीभिर्यस्मिन्नग्रे योन्यां गर्भो अन्तः ।
प्लाशिर्व्यक्तः शतधार उत्सो दुहे न कुम्भी स्वधां पितृभ्यः ॥८॥ ८४
मुख सदस्य शिर इत् सतेन जिह्वा पवित्रमश्विनासन्त्सरस्वती ।
चप्यं न पायुर्भिषगस्य वालो वस्तिर्न शेपो हरसा तरस्वी ॥९॥ ८५
अश्विभ्यां चक्षुरमृतं ग्रहाभ्यां छागेन तेजो हविषा शृतेन ।
पक्ष्माणि गोधूमैः कुवलैरुतानि पेशो न शुक्रमसितं वसाते ॥१०॥ ८६
अविर्न मेषो नसि वीर्याय प्राणस्य पन्था अमृतो ग्रहाभ्याम् ।
सरस्वत्युपवाकैर्व्यानं नस्यानि बर्हिर्बदरैर्जजान ॥११॥ ८७
इन्द्रस्य रूपमृषभो बलाय कर्णाभ्या श्रोत्रममृतं ग्रहाभ्याम् ।
यवा न बर्हिर्भ्रुवि केसराणि कर्कन्धु जज्ञे मधु सारघं मुखात् ॥१२॥ ८८
आत्मन्नुपस्थे न वृकस्य लोम मुखे श्मश्रूणि न व्याघ्रलोम ।
केशा न शीर्षन्यशसे श्रियै शिखा सिंहस्य लोम त्विषिरिन्द्रियाणि ॥१३॥ ८९
अङ्गान्यात्मन् भिषजा तदश्विनात्मानमङ्गैः समधात् सरस्वती ।
इन्द्रस्य रूप शतमानमायुश्चन्द्रेण ज्योतिरमृतं दधानाः ॥१४॥ ९०
सरस्वती योन्यां गर्भमन्तरश्विभ्यां पत्नी सुकृतं बिभर्ति ।
अपा रसेन वरुणो न साम्नेन्द्र श्रियै जनयन्नप्सु राजा ॥१५॥ ९१
तेजः पशूना हविरिन्द्रियावत् परिस्रुता पयसा सारघं मधु ।
अश्विभ्यां दुग्धं भिषजा सरस्वत्या सुतासुताभ्याममृतः सोम इन्दुः ॥१६॥ (६) ९२

क्षत्रस्य नाभिरसि क्षत्रस्य योनिरसि । मा त्वा हिंसीन्मा मा हिंसीः ।
निषसाद धृतव्रतो वरुणः पस्त्यास्वा । साम्राज्याय सुक्रतुः । मृत्योः पाहि विद्योत्पाहि ।
देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ॥१॥ ९३ [१८६६]

अश्विनोर्भैषज्येन तेजसे ब्रह्मवर्चसायाभि षिञ्चामि सरस्वत्यै भैषज्येन वीर्यायान्नाद्यायाभि षिञ्चामि।
इन्द्रस्येन्द्रियेण बलाय श्रियै यशसेऽभि षिञ्चामि ॥२॥ ९४
कोऽसि कतमोऽसि कस्मै त्वा काय त्वा । सुश्लोक सुमङ्गल सत्यराजन् ॥३॥ ९५
शिरो मे श्रीर्यशो मुखं त्विषिः केशाश्च श्मश्रूणि ।
राजा मे प्राणो अमृतꣳ सम्राट् चक्षुर्विराट् श्रोत्रम् ॥४॥ ९६
जिह्वा मे भद्रं वाङ् महो मनो मन्युः स्वराड् भामः ।
मोदाः प्रमोदा अङ्गुलीरङ्गानि मित्रं मे सहः ॥५॥ ९७
बाहू मे बलमिन्द्रियꣳ हस्तौ मे कर्म वीर्यम् । आत्मा क्षत्रमुरो मम ॥६॥ ९८
पृष्ठीर्मे राष्ट्रमुदरमꣳसौ ग्रीवाश्च श्रोणी । ऊरू अरत्नी जानुनी विशो मेऽङ्गानि सर्वतः ॥७॥ ९९
नाभिर्मे चित्तं विज्ञानं पायुर्मेऽपचितिर्भसत् ।
आनन्दनन्दा आण्डौ मे भगः सौभाग्यं पसः ॥८॥ १००
जङ्घाभ्यां पद्भ्यां धर्मोऽसि विशि राजा प्रतिष्ठितः ।
प्रति क्षत्रे प्रति तिष्ठामि राष्ट्रे प्रत्यश्वेषु प्रति तिष्ठामि गोषु ॥९॥ १०१
प्रत्यङ्गेषु प्रति तिष्ठाम्यात्मन् प्रति प्राणेषु प्रति तिष्ठामि पुष्टे ।
प्रति द्यावापृथिव्योः प्रति तिष्ठामि यज्ञे ॥१०॥ १०२
त्रया देवा एकादश त्रयस्त्रिꣳशाः सुराधसः ।
बृहस्पतिपुरोहिता देवस्य सवितुः सवे । देवा देवैरवन्तु मा ॥११॥ १०३
प्रथमा द्वितीयैर्द्वितीयास्तृतीयैस्तृतीयाः सत्येन ।
सत्यं यज्ञेन यज्ञो यजुर्भिर्यजूꣳषि सामभिः ॥१२॥ १०४
सामान्यृग्भिर्ऋचः पुरोऽनुवाक्याभिः पुरोऽनुवाक्या याज्याभिर्याज्या वषट्कारैः ।
वषट्कारा आहुतिभिराहुतयो मे कामान्त्समर्धयन्तु भूः स्वाहा ॥१३॥ १०५
लोमानि प्रयतिर्मम त्वङ् म आनतिरागतिः ।
माꣳसं म उपनतिर्वस्वस्थि मज्जा म आनतिः ॥१४॥७॥ १०६ [१२७१]

स्वाद्वीं त्वैकादश ॥११॥ देवा यज्ञं विंशतिः ॥२०॥ सुरावन्तमेकोनविंशतिः ॥१९॥ उदीरतामेकविंशतिः ॥२१॥
सोमो राजा पञ्च ॥५॥ सीसेन तन्त्रं षोळश ॥१६॥ क्षत्रस्य नाभिश्चतुर्दश ॥१४॥

॥ सप्तानुवाकेषु षडुत्तरशतम् ॥ १०६ ॥

॥ इति शुक्लयजुःकाण्वसंहितायां एकविंशोऽध्यायः ॥ २१ ॥

## द्वाविंशोऽध्यायः ।

यद्देवा देवहेळनं देवासश्चकृमा वयम् । अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वꣳहसः ॥१॥ १
यदि दिवा यदि नक्तमेनाꣳसि चकृमा वयम् ।
वायुर्मा तस्मादेनसो विश्वान्मुञ्चत्वꣳहसः ॥२॥ २
यदि जाग्रद्यदि स्वप्न एनाꣳसि चकृमा वयम् ।
सूर्यो मा तस्मादेनसो विश्वान्मुञ्चत्वꣳहसः ॥३॥ ३
यद् ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये । यच्छूद्रे यदर्ये यदेनश्चकृमा वयम् ।
यदेकस्याधि धर्मणि तस्यावयजनमसि ।
यदापो अघ्न्या इति वरुणेति शपामहे ततो वरुण नो मुञ्च ।
अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः ।
अव देवैर्देवकृतमेनोऽयक्ष्यव मर्त्यैर्मर्त्यकृतं पुरुराव्णो देव रिषस्पाहि ।
समुद्रे ते हृदयमप्स्वन्तः सं त्वा विशन्त्वोषधीरुतापः ।
सुमित्रिया न आप ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु । योऽस्मान्द्वेष्टि यं च वयं द्विष्मः ॥४॥ ४
द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव । पूतं पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः ॥५॥ ५
उद्वयं तमसस्परि स्वः पश्यन्त उत्तरम् । देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥६॥ ६
अपो अद्यान्वचारिषꣳ रसेन समसृक्ष्महि ।
पयस्वानग्न आगमं तं मा सꣳ सृज वर्चसा प्रजया च धनेन च ।
एधोऽस्येधिषीमहि समिदसि तेजोऽसि तेजो मयि धेहि ॥७॥ ७
समाववर्ति पृथिवी समुषाः समु सूर्यः । समु विश्वमिदं जगत् ।
वैश्वानरज्योतिर्भूयासं विभून्कामान्व्यश्नवै भूः स्वाहा ॥८॥ (१) ८

अभ्या दधामि समिधमग्ने व्रतपते त्वयि । व्रतं च श्रद्धां चोपैमीन्धे त्वा दीक्षितो अहम् ॥१॥ ९
यत्र ब्रह्म च क्षत्रं च सम्यञ्चौ चरतः सह । तं लोकं पुण्यं प्रज्ञेषं यत्र देवाः सहाग्निना ॥२॥ १०
यत्रेन्द्रश्च वायुश्च सम्यञ्चौ चरतः सह । तं लोकं पुण्यं प्रज्ञेषं यत्र सेदिर्न विद्यते ॥३॥ ११
अꣳशुना ते अꣳशुः पृच्यतां परुषा परुः । गन्धस्ते सोममवतु मदाय रसो अच्युतः ॥४॥ १२
सिञ्चन्ति परि षिञ्चन्त्युत्सिञ्चन्ति पुनन्ति च । सुरायै बभ्र्वै मदे किन्त्वो वदति किन्त्वः ॥५॥ १३

[२२९१]

धानावन्तं करम्भिणमपूपवन्तमुक्थिनम् । इन्द्र प्रातर्जुषस्व नः ॥६॥ १४
बृहदिन्द्राय गायत मरुतो वृत्रहन्तमम् ।
येन ज्योतिरजनयन्नृतावृधो देवं देवाय जागृवि ॥७॥ १५
अध्वर्यो अद्रिभिः सुतꣳ सोमं पवित्र आ नय । पुनीहीन्द्राय पातवे ॥८॥ (२) १६

यो भूतानामधिपतिर्यस्मिँल्लोका अधि श्रिताः ।
य ईशे महतो महाꣳस्तेन गृह्णामि त्वामहं मयि गृह्णामि त्वामहम् ॥१॥ १७
उपयामगृहीतोऽस्यश्विभ्यां त्वा सरस्वत्यै त्वेन्द्राय त्वा सुत्राम्णे ।
एष ते योनिरश्विभ्यां त्वा सरस्वत्यै त्वेन्द्राय त्वा सुत्राम्णे ॥२॥ १८
प्राणपा मे अपानपाश्चक्षुष्पाः श्रोत्रपाश्च मे । वाचो मे विश्वभेषजो मनसोऽसि विलायकः॥३॥ १९
अश्विनकृतस्य ते सरस्वतिकृतस्येन्द्रेण सुत्राम्णा कृतस्य । उपहूत उपहूतस्य भक्षयामि ॥४॥ (३) २०

समिद्ध इन्द्र उषसामनीके पुरोरुचा पूर्वकृद्वावृधानः ।
त्रिभिर्देवैस्त्रिꣳशता वज्रबाहुर्जघान वृत्रं वि दुरो ववार ॥१॥ २१
नराशꣳसः प्रति शूरो मिमानस्तनूनपात्प्रति यज्ञस्य धाम ।
गोभिर्वपावान्मधुना समञ्जन् हिरण्यैश्चन्द्री यजति प्रचेताः ॥२॥ २२
ईळितो देवैर्हरिवाँ२ अभिष्टिराजुह्वानो हविषा शर्धमानः ।
पुरन्दरो गोत्रभिद्वज्रबाहुरा यातु यज्ञमुप नो जुषाणः ॥३॥ २३
जुषाणो बर्हिर्हरिवान्न इन्द्रः प्राचीनꣳ सीदत्प्रदिशा पृथिव्याः ।
उरुप्रथाः प्रथमानꣳ स्योनमादित्यैरक्तं वसुभिः सजोषाः ॥४॥ २४
इन्द्रं दुरः कवष्यो धावमाना वृषाणं यन्तु जनयः सुपत्नीः ।
द्वारो देवीरभितो वि श्रयन्ताꣳ सुवीरा वीरं प्रथमाना महोभिः ॥५॥ २५
उषासानक्ता बृहती बृहन्तं पयस्वती सुदुघे शूरमिन्द्रम् ।
तन्तुं ततं पेशसा संवयन्ती देवानां देवं यजतः सुरुक्मे ॥६॥ २६
दैव्या मिमाना मनुषः पुरुत्रा होतारा इन्द्रं प्रथमा सुवाचा ।
मूर्धन्यज्ञस्य मधुना दधाना प्राचीनं ज्योतिर्हविषा वृधातः ॥७॥ २७
तिस्रो देवीर्हविषा वर्धमाना इन्द्रं जुषाणा जनयो न पत्नीः ।
अच्छिन्नं तन्तुं पयसा सरस्वतीळा देवी भारती विश्वतूर्तिः ॥८॥ २८ [१३०७]

त्वष्टा दधच्छुष्ममिन्द्राय वृष्णेऽपाकोचिष्टुर्यशसे पुरूणि ।
वृषा यजन्वृषणं भूरिरेता मूर्धन्यज्ञस्य समनक्तु देवान् ॥९॥ २९
वनस्पतिरवसृष्टो न पाशैस्त्मन्या समञ्जञ्छमिता न देवः ।
इन्द्रस्य हव्यैर्जठरं पृणानः स्वदाति यज्ञं मधुना घृतेन ॥१०॥ ३०
स्तोकानामिन्दुं प्रति शूर इन्द्रो वृषायमाणो वृषभस्तुराषाट् ।
घृतप्रुषा मनसा मोदमानाः स्वाहा देवा अमृता मादयन्ताम् ॥११॥ (४) ३१

आ यात्विन्द्रोऽवस उप न इह स्तुतः सधमादस्तु शूरः ।
वावृधानस्तविषीर्यस्य पूर्वीर्द्यौर्न क्षत्रमभिभूति पुष्यात् ॥१॥ ३२
आ न इन्द्रो दूरादा न आसादभिष्टिकृदवसे यासदुग्रः ।
ओजिष्ठेभिर्नृपतिर्वज्रबाहुः संगे समत्सु तुर्वणिः पृतन्यून् ॥२॥ ३३
आ न इन्द्रो हरिभिर्यात्वच्छार्वाचीनोऽवसे राधसे च ।
तिष्ठाति वज्री मघवा विरप्शीमं यज्ञमनु नो वाजसातौ ॥३॥ ३४
त्रातारमिन्द्रमवितारमिन्द्रꣳ हवेहवे सुहवꣳ शूरमिन्द्रम् ।
ह्वयामि शक्रं पुरुहूतमिन्द्रꣳ स्वस्ति नो मघवा धात्विन्द्रः ॥४॥ ३५
इन्द्रः सुत्रामा स्ववाँ२ अवोभिः सुमृडीको भवतु विश्ववेदाः ।
बाधतां द्वेषो अभयं कृणोतु सुवीर्यस्य पतयः स्याम ॥५॥ ३६
तस्य वयꣳ सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम ।
स सुत्रामा स्ववाँ२ इन्द्रो अस्मे आराच्चिद् द्वेषः सनुतर्युयोतु ॥६॥ ३७
आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः ।
मा त्वा के चिन्नि यमन्विं न पाशिनोऽति धन्वेव ताँ२ इहि ॥७॥ ३८
एवेदिन्द्रं वृषणं वज्रबाहुं वसिष्ठासो अभ्यर्चन्त्यर्कैः ।
स न स्तुतो वीरवद्धातु गोमद्यूयं पात स्वस्तिभिः सदा नः ॥८॥ (५) ३९

समिद्धो अग्निरश्विना तप्तो घर्मो विराट् सुतः ।
दुहे धेनुः सरस्वती सोमꣳ शुक्रमिहेन्द्रियम् ॥१॥ ४०
तनूपा भिषजा सुतेऽश्विनोभा सरस्वती । मध्वा रजाꣳसीन्द्रियमिन्द्राय पथिभिर्वहान् ॥२॥ ४१
इन्द्रायेन्दुꣳ सरस्वती नराशꣳसेन नग्नहुम् ।
अधातामश्विना मधु भेषजं भिषजा सुते ॥३॥ ४२ [१३२१]

आजुह्वाना सरस्वतीन्द्रायेन्द्रियाणि वीर्यम् । इडाभिरश्विना इषꣳ समूर्जꣳ सꣳ रयिं दधुः ॥४॥ ४३
अश्विना नमुचेः सुतꣳ सोमꣳ शुक्रं परिस्रुता । सरस्वती तमा भरद्बर्हिषेन्द्राय पातवे ॥५॥ ४४
कवष्यो न व्यचस्वतीरश्विभ्यां न दुरो दिशः ।
इन्द्रो न रोदसी उभे दुहे कामान्त्सरस्वती ॥६॥ ४५
उषासानक्तमश्विना दिवेन्द्रꣳ सायमिन्द्रियैः । संजानाने सुपेशसा समञ्जाते सरस्वत्या ॥७॥ ४६
पातं नो अश्विना दिवा पाहि नक्तꣳ सरस्वति ।
दैव्या होतारा भिषजा पातमिन्द्रꣳ सचा सुते ॥८॥ ४७
तिस्रस्त्रेधा सरस्वत्यश्विना भारतीडा । तीव्रं परिस्रुता सोममिन्द्राय सुषुवुर्मदम् ॥९॥ ४८
अश्विना भेषजं मधु भेषजं नः सरस्वती । इन्द्रे त्वष्टा यशः श्रियꣳ रूपꣳरूपमधुः सुते ॥१०॥ ४९
ऋतुथेन्द्रो वनस्पतिः शशमानः परिस्रुता । कीलालमश्विभ्यां मधु दुहे धेनुः सरस्वती ॥११॥ ५०
गोभिर्न सोममश्विना मासरेण परिस्रुता । समधातꣳ सरस्वत्या स्वाहेन्द्रे सुतं मधु ॥१२॥ (६) ५१

अश्विना हविरिन्द्रियं नमुचेर्धिया सरस्वती । आ शुक्रमासुराद्वसु मघमिन्द्राय जभ्रिरे ॥१॥ ५२
यमश्विना सरस्वती हविषेन्द्रमवर्धयन् । स बिभेद बलं मघं नमुचावासुरे सचा ॥२॥ ५३
तमिन्द्रं पशवः सचाश्विनोभा सरस्वती । दधाना अभ्यनूषत हविषा यज्ञ इन्द्रियैः ॥३॥ ५४
य इन्द्र इन्द्रियं दधुः सविता वरुणो भगः । स सुत्रामा हविष्पतिर्यजमानाय सश्चत ॥४॥ ५५
सविता वरुणो दधद्यजमानाय दाशुषे । आदत्त नमुचेर्वसु सुत्रामा बलमिन्द्रियम् ॥५॥ ५६
वरुणः क्षत्रमिन्द्रियं भगेन सविता श्रियम् । सुत्रामा यशसा बलं दधाना यज्ञमाशत ॥६॥ ५७
अश्विना गोभिरिन्द्रियमश्वेभिर्वीर्यं बलम् । हविषेन्द्रꣳ सरस्वती यजमानमवर्धयन् ॥७॥ ५८
ता नासत्या सुपेशसा हिरण्यवर्तनी नरा । सरस्वती हविष्मतीन्द्र कर्मसु नोऽवत ॥८॥ ५९
ता भिषजा सुकर्मणा सा सुदुघा सरस्वती । स वृत्रहा शतक्रतुरिन्द्राय दधुरिन्द्रियम् ॥९॥ ६०
युवꣳ सुराममश्विना नमुचावासुरे सचा । विपिपानाः सरस्वतीन्द्रं कर्मस्वावत ॥१०॥ ६१

पुत्रमिव पितरावश्विनोभेन्द्रावथुः काव्यैर्दꣳसनाभिः ।
यत्सुरामं व्यपिबः शचीभिः सरस्वती त्वा मघवन्नभिष्णक् ॥११॥ ६२
यस्मिन्नश्वास ऋषभास उक्षणो वशा मेषा अवसृष्टास आहुताः ।
कीलालपे सोमपृष्ठाय वेधसे हृदा मतिं जनय चारुमग्नये ॥१२॥ ६३
अहाव्यग्ने हविरास्ये ते स्रुचीव घृतं चम्वीव सोमः ।
वाजसनिꣳ रयिमस्मे सुवीरं प्रशस्तं धेहि यशसं बृहन्तम् ॥१३॥ (७) ६४ [११४१]

अश्विना तेजसा चक्षुः प्राणेन सरस्वती वीर्यम् । वाचेन्द्रो बलेनेन्द्राय दधुरिन्द्रियम् ॥१॥ ६५
गोमदू षु णासत्याश्वावद्यातमश्विना । वर्ती रुद्रा नृपाय्यम् ॥२॥ ६६
न यत्परो नान्तर आदधर्षद्वृषण्वसू । दुःशꣳसो मर्त्यो रिपुः ॥३॥ ६७
ता न आ वोळ्हमश्विना रयिं पिशङ्गसंदृशम् । धिष्ण्या वरिवोविदम् ॥४॥ ६८
पावका नः सरस्वती वाजेभिर्वाजिनीवती । यज्ञं वष्टु धियावसुः ॥५॥ ६९
चोदयित्री सूनृतानां चेतन्ती सुमतीनाम् । यज्ञं दधे सरस्वती ॥६॥ ७०
महो अर्णः सरस्वती प्र चेतयति केतुना । धियो विश्वा वि राजति ॥७॥ ७१
इन्द्रा याहि चित्रभानो सुता इमे त्वायवः । अण्वीभिस्तना पूतासः ॥८॥ ७२
इन्द्रा याहि धियेषितो विप्रजूतः सुतावतः । उप ब्रह्माणि वाघतः ॥९॥ ७३
इन्द्रा याहि तूतुजान उप ब्रह्माणि हरिवः । सुते दधिष्व नश्चनः ॥१०॥ ७४
अश्विना पिबतां मधु सरस्वत्या सजोषसा ।
इन्द्रः सुत्रामा वृत्रहा जुषन्ताꣳ सोम्यं मधु ॥११॥ (८) ७५ [१३५४]

यद्देवा अष्ट ॥ ८ ॥ अभ्यादधामीत्यष्ट ॥ ८ ॥ यो भूतानां चतस्रः ॥ ४ ॥ समिद्ध इन्द्र एकादश ॥ ११ ॥ अयात्वष्ट ॥८॥ समिद्धो अग्निर्द्वादश ॥१२॥ अश्विना हविस्त्रयोदश ॥१३॥ अश्विना तेजसैकादश ॥११॥

॥ अष्टानुवाकेषु पञ्चसप्ततिः ॥ ७५ ॥

॥ इति शुक्लयजुःकाण्वसंहितायां द्वाविंशोऽध्यायः ॥ २२ ॥

## त्रयोविंशोऽध्यायः ।

इमं मे वरुण श्रुधी हवमद्या च मृळय । त्वामवस्युरा चके ॥१॥ १
तत्त्वा यामि ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्भिः ।
अहेळमानो वरुणेह बोध्युरुशꣳस मा न आयुः प्र मोषीः ॥२॥ २
त्वं नो अग्ने वरुणस्य विद्वान् देवस्य हेळो अव यासिसीष्ठाः ।
यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषाꣳसि प्र मुमुग्ध्यस्मत् ॥३॥ ३
स त्वं नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ ।
अव यक्ष्व नो वरुणꣳ रराणो वीहि मृळीकꣳ सुहवो न एधि ॥४॥ ४
महीमू षु मातरꣳ सुव्रतानामृतस्य पत्नीमवसे हुवेम ।
तुविक्षत्रामजरन्तीमुरूचीꣳ सुशर्माणमदितिꣳ सुप्रणीतिम् ॥५॥ ५ [१३५९]

सुत्रामाणं पृथिवीं द्यामनेहसꣳ सुशर्माणमदितिꣳ सुप्रणीतिम् ।
दैवीं नावꣳ स्वरित्रामनागसमस्रवन्तीमा रुहेमा स्वस्तये ॥६॥ ६

सुनावमा रुहेयमस्रवन्तीमनागसम् । शतारित्राꣳ स्वस्तये ॥७॥ ७

आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् । मध्वा रजाꣳसि सुक्रतू ॥८॥ ८

प्र बाहवा सिसृतं जीवसे न आ नो गव्यूतिमुक्षतं घृतेन ।
आ मा जने श्रवयतं युवाना श्रुतं मे मित्रावरुणा हवेमा ॥९॥ ९

शं नो भवन्तु वाजिनो हवेषु देवताता मितद्रवः स्वर्काः ।
जम्भयन्तोऽहिं वृकꣳ रक्षाꣳसि सनेम्यस्मद्युयवन्नमीवाः ॥१०॥ १०

ते नो अर्वन्तो हवनश्रुतो हवं विश्वे शृण्वन्तु वाजिनो मितद्रवः ।
सहस्रसा मेधसाता इव त्मना महो ये धनꣳ समिथेषु जभ्रिरे ॥११॥ ११

वाजेवाजेऽवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः ।
अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः ॥१२॥ (१) १२

समिद्धो अग्निः समिधा सुसमिद्धो वरेण्यः । गायत्री छन्द इन्द्रियं त्र्यविर्गौर्वयो दधुः ॥१॥ १३
तनूनपाच्छुचिव्रतस्तनूपाश्च सरस्वती । उष्णिहा छन्द इन्द्रियं दित्यवाड् गौर्वयो दधुः ॥२॥ १४
इळाभिरग्निरीड्यः सोमो देवो अमर्त्यः । अनुष्टुप् छन्द इन्द्रियं पञ्चाविर्गौर्वयो दधुः ॥३॥ १५
सुबर्हिरग्निः पूषण्वान्त्स्तीर्णबर्हिरमर्त्यः । बृहती छन्द इन्द्रियं त्रिवत्सो गौर्वयो दधुः ॥४॥ १६

दुरो देवीर्दिशो महीर्ब्रह्मा देवो बृहस्पतिः ।
पङ्क्तिश्छन्द इहेन्द्रियं तुर्यवाड् गौर्वयो दधुः ॥५॥ १७

उषे यह्वी सुपेशसा विश्वे देवा अमर्त्याः । त्रिष्टुप् छन्द इहेन्द्रियं पष्ठवाड् गौर्वयो दधुः ॥६॥ १८
दैव्या होतारा भिषजेन्द्रेण सयुजा युजा । जगती छन्द इन्द्रियमनड्वान् गौर्वयो दधुः ॥७॥ १९
तिस्र इळा सरस्वती भारती मरुतो विशः । विराट् छन्द इहेन्द्रियं धेनुर्गौर्न वयो दधुः ॥८॥ २०
त्वष्टा तुरीपो अद्भुत इन्द्राग्नी पुष्टिवर्धना । द्विपदा छन्द इन्द्रियमुक्षा गौर्न वयो दधुः ॥९॥ २१

शमिता नो वनस्पतिः सविता प्रसुवन् भगम् ।
ककुप् छन्द इहेन्द्रियं वशा वेहद्वयो दधुः ॥१०॥ २२

स्वाहा यज्ञं वरुणः सुक्षत्रो भेषजं करत् ।
अतिच्छन्दा इन्द्रियं बृहदृषभो गौर्वयो दधुः ॥११॥ (२) २३ [१३७७]

वसन्तेन ऋतुना देवा वसवस्त्रिवृता स्तुताः। रथन्तरेण तेजसा हविरिन्द्रे वयो दधुः ॥१॥ २४
ग्रीष्मेण ऋतुना देवा रुद्राः पञ्चदशे स्तुताः। बृहता यशसा बलꣳ हविरिन्द्रे वयो दधुः ॥२॥ २५
वर्षाभिर्ऋतुनादित्या स्तोमे सप्तदशे स्तुताः।
वैरूपेण विशौजसा हविरिन्द्रे वयो दधुः ॥३॥ २६
शारदेन ऋतुना देवा एकविꣳश ऋभवं स्तुताः॥
वैराजेन श्रिया श्रियꣳ हविरिन्द्रे वयो दधुः ॥४॥ २७
हेमन्तेन ऋतुना देवास्त्रिणवे मरुतं स्तुताः। बलेन शक्वरीः सहो हविरिन्द्रे वयो दधुः ॥५॥ २८
शैशिरेण ऋतुना देवास्त्रयस्त्रिꣳशेऽमृता स्तुताः।
सत्येन रेवतीः क्षत्रꣳ हविरिन्द्रे वयो दधुः ॥६॥ (३) २९

होता यक्षत्समिधाग्निमिळस्पदेऽश्विनेन्द्रꣳ सरस्वतीमजो धूम्रो न गोधूमैः कुवलैर्भेषजं मधु।
शष्पैर्न तेज इन्द्रियं पयः सोमः परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज ॥१॥ ३०
होता यक्षत्तनूनपात्सरस्वतीमविर्मेषो न भेषजं पथा मधुमता भरन्नश्विनेन्द्राय वीर्यम्।
बदरैरुपवाकाभिर्भेषजं तोक्मभिः पयः सोमः परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज ॥२॥ ३१
होता यक्षन्नराशꣳसं न नग्नहुं पतिꣳ सुरया भेषजं मेषः सरस्वती भिषग्रथो न चन्द्र्यश्विनोर्वपा इन्द्रस्य
वीर्यम्। बदरैरुपवाकाभिर्भेषजं तोक्मभिः पयः सोमः परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज ३॥३२
होता यक्षदिळैळित आजुह्वानः सरस्वतीमिन्द्रं बलेन वर्धयन्नृषभेण गवेन्द्रियमश्विनेन्द्राय भेषजम्।
यवैः कर्कन्धुभिर्मधु लाजैर्न मासरं पयः सोमः परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज ॥४॥ ३३
होता यक्षद्बर्हिरूर्णम्रदा भिषङ् नासत्या भिषजाश्विनाश्वा शिशुमती भिषग्धेनुः सरस्वती भिषक्।
दुह इन्द्राय भेषजं पयः सोमः परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज ॥५॥ ३४
होता यक्षद्दुरो दिशः कवष्यो न व्यचस्वतीरश्विभ्यां न दुरो दिश इन्द्रो न रोदसी दुघे दुहे धेनुः
सरस्वत्यश्विनेन्द्राय भेषजम्।
शुक्रं न ज्योतिरिन्द्रियं पयः सोमः परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज ॥६॥ ३५
होता यक्षत्सुपेशसोषे नक्तं दिवाश्विना समञ्जाते सरस्वत्या त्विषिमिन्द्रे न भेषजम्।
श्येनो न रजसा हृदा श्रिया न मासरं पयः सोमः परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज ॥७॥३६
होता यक्षद्दैव्या होतारा भिषजाश्विनेन्द्रं न जागृवि दिवा नक्तं न भेषजैः।
शूषꣳ सरस्वती भिषक् सीसेन दुह इन्द्रियं पयः सोमः परिस्रुता
घृतं मधु व्यन्त्वाज्यस्य होतर्यज ॥८॥ ३७ [१३९१]

होता यक्षत्तिस्रो देवीर्न भेषजं त्रयस्त्रिधातवोऽपसो रूपमिन्द्रे हिरण्ययमश्विनेळा न भारती ।
वाचा सरस्वती मह इन्द्राय दुह इन्द्रियं पयः सोमः परिस्रुता
घृतं मधु व्यन्त्वाज्यस्य होतर्यज ॥९॥ ३८
होता यक्षत् सुरेतसमृषभं नर्यापसं त्वष्टारमिन्द्रमश्विना भिषजं
न सरस्वतीमोजो न जूतिरिन्द्रियं वृको न रभसो भिषक् ।
यशः सुरया भेषजꣳ श्रिया न मासरं पयः सोमः
परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज ॥१०॥ ३९
होता यक्षद्वनस्पतिꣳ शमितारꣳ शतक्रतुं भीमं न मन्युꣳ राजानं व्याघ्रं नमसाश्विना ।
भामꣳ सरस्वती भिषगिन्द्राय दुह इन्द्रियं पयः सोमः
परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज ॥११॥ ४०
होता यक्षदग्निꣳ स्वाहाज्यस्य स्तोकानाꣳ स्वाहा मेदसां
पृथक् स्वाहा छागमश्विभ्याꣳ स्वाहा मेषꣳ सरस्वत्यै ।
स्वाहं ऋषभमिन्द्राय सिꣳहाय सहस इन्द्रियꣳ स्वाहाग्निं न भेषजꣳ स्वाहा सोममिन्द्रियम् ।
स्वाहेन्द्रꣳ सुत्रामाणꣳ सवितारं वरुणं भिषजां पतिꣳ स्वाहा वनस्पतिं प्रियं पाथो न भेषजम् ।
स्वाहा देवा आज्यपा जुषाणो अग्निर्भेषजं पयः सोमः
परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज ॥१२॥ (४) ४१

होता यक्षदश्विनौ छागस्य वपाया मेदसो जुषेताꣳ हविर्होतर्यज ।
होता यक्षत्सरस्वतीं मेषस्य वपाया मेदसो जुषताꣳ हविर्होतर्यज ।
होता यक्षदिन्द्रमृषभस्य वपाया मेदसो जुषताꣳ हविर्होतर्यज ॥१॥ ४२
होता यक्षदश्विनौ सरस्वतीमिन्द्रꣳ सुत्रामाणमिमे सोमाः
सुरामाणश्छागैर्न मेषैर्ऋषभैः सुताः ।
शष्पैर्न तोक्मभिर्लाजैर्महस्वन्तो मदा मासरेण परिष्कृताः
शुक्राः पयस्वन्तोऽमृताः प्रस्थिता वो मधुश्च्युतस्तानश्विना सरस्वतीन्द्रः
सुत्रामा वृत्रहा जुषन्ताꣳ सोम्यं मधु ।
पिबन्तु मदन्तु व्यन्तु होतर्यज ॥२॥ ४३ [१३९७]

होता यक्षदश्विनौ छागस्य हविष आत्तामद्य मध्यतो मेद उद्भृतं पुरा द्वेषोभ्यः पुरा पौरुषेय्या
गृभः। घस्तां नूनं घासे अज्राणां यवसप्रथमानाꣳ सुमत्क्षराणाꣳ शतरुद्रियाणामग्निष्वात्तानां

पीवोपवसनानाम् । पार्श्वतः श्रोणितः शितामत उत्सादतोऽङ्गादङ्गादवत्तानां करत एवा-
श्विना जुषेताꣳ हविर्होतर्यज । होता यक्षत्सरस्वतीं मेषस्य हविष आवयदद्य मध्यतो मेद
उद्भृतं पुरा द्वेषोभ्यः पुरा पौरुषेय्या गृभः । घसन्नूनं घासे अज्राणां यवसप्रथमानाꣳ
सुमत्क्षराणाꣳ शतरुद्रियाणामग्निष्वात्तानां पीवोपवसनानाम् । पार्श्वतः श्रोणितः शितामत
उत्सादतोऽङ्गादङ्गादवत्तानां करदेवꣳ सरस्वती जुषताꣳ हविर्होतर्यज । होता यक्षदिन्द्रमृष-
भस्य हविष आवयदद्य मध्यतो मेद उद्भृतं पुरा द्वेषोभ्यः पुरा पौरुषेय्या गृभः । घसन्नूनं
घासे अज्राणां यवसप्रथमानाꣳ सुमत्क्षराणाꣳ शतरुद्रियाणामग्निष्वात्तानां पीवोपवसनानाम् ।
पार्श्वतः श्रोणितः शितामत उत्सादतोऽङ्गादङ्गादवत्तानां करदेवमिन्द्रो जुषताꣳ हविर्होतर्यज
॥३॥ ४४

होता यक्षद्वनस्पतिमभि हि पिष्टतमया रभिष्ठया रशनयाधित ।
यत्राश्विनोश्छागस्य हविषः प्रिया धामानि यत्र सरस्वत्या मेषस्य हविषः
प्रिया धामानि यत्रेन्द्रस्य ऋषभस्य हविषः प्रिया धामानि ।
यत्राग्नेः प्रिया धामानि यत्र सोमस्य प्रिया धामानि यत्रेन्द्रस्य सुत्राम्णः प्रिया धामानि ।
यत्र सवितुः प्रिया धामानि यत्र वरुणस्य प्रिया धामानि यत्र वनस्पतेः प्रिया पाथाꣳसि ॥
यत्र देवानामाज्यपानां प्रिया धामानि यत्राग्नेर्होतुः प्रिया धामानि ।
तत्रैतान्प्रस्तुत्येवोपस्तुत्येवोपावस्रक्षद्रभीयस इव कृत्वी करदेवं देवो
वनस्पतिर्जुषताꣳ हविर्होतर्यज ॥४॥ ४५

होता यक्षदग्निꣳ स्विष्टकृतमयाळग्निरश्विनोश्छागस्य हविषः प्रिया धामान्ययाट्
सरस्वत्या मेषस्य हविषः प्रिया धामान्ययाळिन्द्रस्य ऋषभस्य हविषः प्रिया धामानि ।
अयाळग्नेः प्रिया धामान्ययाट् सोमस्य प्रिया धामान्ययाळिन्द्रस्य सुत्राम्णः प्रिया धामानि ।
अयाट् सवितुः प्रिया धामान्ययाड् वरुणस्य प्रिया धामान्ययाड् वनस्पतेः प्रिया पाथाꣳसि ।
अयाड् देवानामाज्यपानां प्रिया धामानि यक्षदग्नेर्होतुः प्रिया धामानि । यक्षत्स्वं
महिमानमायजतामेज्या इषः कृणोतु सो अध्वरा जातवेदा जुषताꣳ हविर्होतर्यज ॥५॥ ४६

देवं बर्हिः सरस्वती सुदेवमिन्द्रे अश्विना ।
तेजो न चक्षुरक्ष्योर्बर्हिषा दधुरिन्द्रियं वसुवने वसुधेयस्य व्यन्तु यज ॥१॥ ४७
देवीर्द्वारो अश्विना भिषजेन्द्रे सरस्वती ।
प्राणं न वीर्यं नसि द्वारो दधुरिन्द्रियं वसुवने वसुधेयस्य व्यन्तु यज ॥२॥ ४८ [१२०७]

देवी उषासा अश्विना सुत्रामेन्द्रे सरस्वती ।
बलं न वाचमास्य उषाभ्यां दधुरिन्द्रियं वसुवने वसुधेयस्य व्यन्तु यज ॥३॥ ४९
देवी जोष्ट्री सरस्वत्यश्विनेन्द्रमवर्धयन् ।
श्रोत्रं न कर्णयोर्यशो जोष्ट्रीभ्यां दधुरिन्द्रियं वसुवने वसुधेयस्य व्यन्तु यज ॥४॥ ५०
देवी ऊर्जाहुती दुघे सुदुघेन्द्रे सरस्वत्यश्विना भिषजावतः ।
शुक्रं न ज्योति स्तनयोराहुती धत्त इन्द्रियं वसुवने वसुधेयस्य व्यन्तु यज ॥५॥ ५१
देवा देवानां [illegible]जा होतारा इन्द्रमश्विना वषट्कारैः सरस्वती त्विषिं न हृदये मतिम् ।
होतृभ्यां दधुरिन्द्रियं वसुवने वसुधेयस्य व्यन्तु यज ॥६॥ ५२
देवीस्तिस्रस्तिस्रो देवीरश्विनेळा सरस्वती ।
शूषं न मध्ये नाभ्यामिन्द्राय दधुरिन्द्रियं वसुवने वसुधेयस्य व्यन्तु यज ॥७॥ ५३
देव इन्द्रो नराशꣳसस्त्रिवरूथः सरस्वत्याश्विभ्यामीयते रथः ।
रेतो न रूपममृतं जनित्रमिन्द्राय त्वष्टा दधदिन्द्रियाणि वसुधेयस्य व्यन्तु यज ॥८॥ ५४
देवो देवैर्वनस्पतिर्हिरण्यपर्णो अश्विभ्याꣳ सरस्वत्या सुपिप्पल इन्द्राय पच्यते मधु ।
ओजो न जूतिर्ऋषभो न भामं वनस्पतिर्नो दधदिन्द्रियाणि वसुवने वसुधेयस्य व्यन्तु यज ॥९॥ ५५
देवं बर्हिर्वारितीनामध्वरे स्तीर्णमश्विभ्यामूर्णम्रदाः सरस्वत्या स्योनमिन्द्र ते सदः ।
ईशायै मन्युꣳ राजानं बर्हिषा दधुरिन्द्रियं वसुवने वसुधेयस्य व्यन्तु यज ॥१०॥ ५६
देवो अग्निः स्विष्टकृद्देवान्यक्षद्यथायथꣳ होतारा इन्द्रमश्विना
वाचा वाचꣳ सरस्वतीमग्निꣳ सोमꣳ स्विष्टकृत् ।
स्विष्ट इन्द्रः सुत्रामा सविता वरुणो भिषगिष्टो देवो वनस्पतिः स्विष्टा देवा आज्यपाः ।
स्विष्टो अग्निरग्निना होता होत्रे स्विष्टकृद्यशो न दधदिन्द्रियमूर्जमपचितिꣳ स्वधां
वसुवने वसुधेयस्य व्यन्तु यज ॥११॥ ५७
अग्निमद्य होतारमवृणीतायं यजमानः पचन् पक्तीः
पचन् पुरोळाशान् बध्नन्नश्विभ्यां छागꣳ सरस्वत्यै मेषमिन्द्राय ऋषभम् ।
सुन्वन्नश्विभ्याꣳ सरस्वत्या इन्द्राय सुत्राम्णे सुरासोमान् ॥१२॥ ५८
सूपस्था अद्य देवो वनस्पतिरभवदश्विभ्यां छागेन सरस्वत्यै मेषेणेन्द्राय ऋषभेण ।
अक्षꣳस्तान् मेदस्तः प्रति पचतागृभीषतावीवृधन्त पुरोळाशैरपुरश्विना सरस्वतीन्द्रः सुत्रामा
सुरासोमान् ॥ १३॥ ५९ [१४१३]

त्वामद्य ऋष आर्षेय ऋषीणां नपादवृणीतायं यजमानो बहुभ्य आ संगतेभ्य एष मे देवेषु
वसु वार्यायक्ष्यत इति ।
ता या देवा देव दानान्यदुस्तान्यस्मा आ च शास्वा च गुरस्वेषितश्च होतरसि भद्रवाच्याय
प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहि ॥१४॥ (६) ६० [१४१४]

इमं मे वरुण द्वादश ॥ १२ ॥ समिद्धो अग्निरेकादश ॥ ११ ॥ वसन्तेन षट् ॥ ६ ॥ होता यक्षद् द्वादश ॥ १२ ॥ होता यक्षदश्विनौ छागस्य पञ्च ॥ ५ ॥ देवं बर्हिश्चतुर्दश ॥ १४ ॥
॥ षडनुवाकेषु षष्टिः ॥ ६० ॥
॥ इति शुक्लयजुःकाण्वसंहितायां त्रयोविंशोऽध्यायः ॥ २३ ॥

## अथ चतुर्विंशोऽध्यायः ।

तेजोऽसि शुक्रममृतमायुष्पा आयुर्मे पाहि ।
देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामा ददे ॥१॥ १
इमामगृभ्णन् रशनामृतस्य पूर्व आयुषि विदथेषु कव्या ।
सा नो अस्मिन्त्सुत आ बभूव ऋतस्य सामन्त्सरमारपन्ती ॥२॥ २
अभिधा असि भुवनमसि यन्तासि धर्ता ।
स त्वमग्निं वैश्वानरꣳ सप्रथसं गच्छ स्वाहाकृतः स्वगा त्वा देवेभ्यः ॥३॥ ३
प्रजापतये ब्रह्मन्नश्वं भन्त्स्यामि देवेभ्यः प्रजापतये तेन राध्यासम् ।
तं बधान देवेभ्यः प्रजापतये तेन राध्नुहि ।
प्रजापतये त्वा जुष्टं प्रोक्षामीन्द्राग्निभ्यां त्वा जुष्टं प्रोक्षामि वायवे त्वा जुष्टं प्रोक्षामि
विश्वेभ्यस्त्वा देवेभ्यो जुष्टं प्रोक्षामि सर्वेभ्यस्त्वा देवेभ्यो जुष्टं प्रोक्षामि ॥४॥ ४
यो अर्वन्तं जिघांꣳसति तमभ्यमीति वरुणः । परो मर्तः परः श्वा ॥५॥ (१) ५

अग्नये स्वाहा सोमाय स्वाहापां मोदाय स्वाहा सवित्रे स्वाहा वायवे स्वाहा विष्णवे स्वाहा ।
इन्द्राय स्वाहा बृहस्पतये स्वाहा मित्राय स्वाहा वरुणाय स्वाहा ॥१॥ (२) ६

हिङ्काराय स्वाहा हिङ्कृताय स्वाहा क्रन्दते स्वाहावक्रन्दाय स्वाहा ।
प्रोथते स्वाहा प्रप्रोथाय स्वाहा गन्धाय स्वाहा घ्राताय स्वाहा ॥१॥ ७
निविष्टाय स्वाहोपविष्टाय स्वाहा संदिताय स्वाहा वल्गते स्वाहा ।
आसीनाय स्वाहा शयानाय स्वाहा स्वपते स्वाहा जाग्रते स्वाहा ॥२॥ ८ [ १४२२ ]

कूजते स्वाहा प्रबुद्धाय स्वाहा विजृम्भमाणाय स्वाहा विचृताय स्वाहा ।
सꣳहानाय स्वाहोपस्थिताय स्वाहायनाय स्वाहा प्रायणाय स्वाहा ॥३॥ ९
यते स्वाहा धावते स्वाहोद्द्रावाय स्वाहोद्द्रुताय स्वाहा ।
शूकाराय स्वाहा शूकृताय स्वाहा निषण्णाय स्वाहोत्थिताय स्वाहा ॥४॥ १०
जवाय स्वाहा बलाय स्वाहा विवर्तमानाय स्वाहा विवृत्ताय स्वाहा ।
विधून्वानाय स्वाहा विधूताय स्वाहा शुश्रूषमाणाय स्वाहा शृण्वते स्वाहा ॥५॥ ११
ईक्षमाणाय स्वाहेक्षिताय स्वाहा वीक्षिताय स्वाहा निमेषाय स्वाहा ।
यदत्ति तस्मै स्वाहा यत्पिबति तस्मै स्वाहा यन्मूत्रं करोति तस्मै स्वाहा
कुर्वते स्वाहा कृताय स्वाहा ॥६॥ (३) १२

तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥१॥ १३
हिरण्यपाणिमूतये सवितारमुप ह्वये । स चेत्ता देवता पदम् ॥२॥ १४
देवस्य चेततो महीं प्र सवितुर्हवामहे । सुमतिꣳ सत्यराधसम् ॥३॥ १५
सुष्टुतिꣳ सुमतीवृधो रातिꣳ सवितुरीमहे । प्र देवाय मतीविदे ॥४॥ १६
रातिꣳ सत्पतिं महे सवितारमुप ह्वये । आसवं देववीतये ॥५॥ १७
देवस्य सवितुर्मतिमासवं विश्वदेव्यम् । धिया भगं मनामहे ॥६॥ १८
अग्निꣳ स्तोमेन बोधय समिधानो अमर्त्यम् । हव्या देवेषु नो दधत् ॥७॥ १९
स हव्यवाळमर्त्य उशिग्दूतश्चनोहितः । अग्निर्धिया समृण्वति ॥८॥ २०
तं त्वा घृतस्नवीमहे चित्रभानो स्वर्दृशम् । देवाँ२ आ वीतये वह ॥९॥ २१
अग्निं दूतं पुरो दधे हव्यवाहमुप ब्रुवे । देवाँ२ आ सादयादिह ॥१०॥ (४) २२

अजीजनो हि पवमान सूर्यं विधारे शक्मना पयः । गोजीरया रꣳहमाणः पुरन्ध्या ॥१॥ (५) २३

विभूर्मात्रा प्रभूः पित्राश्वोऽसि हयोऽस्यत्योऽसि मयोऽस्यर्वासि सप्तिरसि वाज्यसि वृषासि नृमणा असि ।
ययुर्नामासि शिशुर्नामास्यादित्यानां पत्वान्विहि ॥१॥ २४
देवा आशापाला एतं देवेभ्योऽश्वं मेधाय प्रोक्षितꣳ रक्षत ।
इह रन्तिरिह रमतामिह धृतिरिह स्वधृतिः स्वाहा ॥२॥ (६) २५

काय स्वाहा कस्मै स्वाहा कतमस्मै स्वाहा ।
स्वाहाधिमाधीताय स्वाहा मनः प्रजापतये स्वाहा चित्तं विज्ञाताय ॥१॥ २६ [१४३०]

अदित्यै स्वाहादित्यै मह्यै स्वाहादित्यै सुमृळीकायै स्वाहा ।
सरस्वत्यै स्वाहा सरस्वत्यै पावकायै स्वाहा सरस्वत्यै बृहत्यै स्वाहा ॥२॥ २७
पूष्णे स्वाहा पूष्णे प्रपथ्याय स्वाहा पूष्णे नरन्धिषाय स्वाहा ।
त्वष्ट्रे स्वाहा त्वष्ट्रे तुरीपाय स्वाहा त्वष्ट्रे पुरुरूपाय स्वाहा ।
विष्णवे स्वाहा विष्णवे निभूयपाय स्वाहा विष्णवे शिपिविष्टाय स्वाहा ॥३॥ २८
विश्वो देवस्य नेतुर्मर्तो वुरीत सख्यम् ।
विश्वो राय इषुध्यति द्युम्नं वृणीत पुष्यसे स्वाहा ॥४॥ (७) २९

आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामा राष्ट्रे राजन्यः ।
शूर इषव्योऽतिव्याधी महारथो जायताम् ॥१॥ ३०
दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिः पुरंधिर्योषा ।
जिष्णू रथेष्ठाः सभेयो युवास्य यजमानस्य वीरो जायताम् ॥२॥ ३१
निकामेनिकामे नः पर्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्ताम् ।
योगक्षेमो नः कल्पताम् ॥३॥ (८) ३२

प्राणाय स्वाहापानाय स्वाहा व्यानाय स्वाहा ।
चक्षुषे स्वाहा श्रोत्राय स्वाहा वाचे स्वाहा मनसे स्वाहा ॥१॥ (९) ३३

प्राच्यै दिशे स्वाहार्वाच्यै दिशे स्वाहा दक्षिणायै दिशे स्वाहार्वाच्यै दिशे स्वाहा ।
प्रतीच्यै दिशे स्वाहार्वाच्यै दिशे स्वाहोदीच्यै दिशे स्वाहार्वाच्यै दिशे स्वाहा ।
ऊर्ध्वायै दिशे स्वाहार्वाच्यै दिशे स्वाहावाच्यै दिशे स्वाहार्वाच्यै दिशे स्वाहा ॥१॥(१०) ३४

अद्भ्यः स्वाहा वार्भ्यः स्वाहोदकाय स्वाहा तिष्ठन्तीभ्यः स्वाहा
स्रवन्तीभ्यः स्वाहा स्यन्दमानाभ्यः स्वाहा ।
कूप्याभ्यः स्वाहा सूद्याभ्यः स्वाहा धार्याभ्यः
स्वाहार्णवाय स्वाहा समुद्राय स्वाहा सरिराय स्वाहा ॥१॥ (११) ३५

वाताय स्वाहा धूमाय स्वाहाभ्राय स्वाहा मेघाय स्वाहा विद्योतमानाय स्वाहा स्तनयते स्वाहा ।
अवस्फूर्जते स्वाहा वर्षते स्वाहावर्षते स्वाहोग्रं वर्षते स्वाहा
शीघ्रं वर्षते स्वाहोद्गृह्णते स्वाहोद्गृहीताय स्वाहा ।
प्रुष्णते स्वाहा शीकायते स्वाहा प्रुष्वाभ्यः स्वाहा
ह्रादुनीभ्यः स्वाहा नीहाराय स्वाहा ॥१॥ (१२) ३६ [१४५०]

अग्नये स्वाहा सोमाय स्वाहेन्द्राय स्वाहा पृथिव्यै स्वाहान्तरिक्षाय स्वाहा ।
दिवे स्वाहा दिग्भ्यः स्वाहाशाभ्यः
स्वाहोर्व्यै दिशे स्वाहार्वाच्यै दिशे स्वाहा ॥१॥(१३) ३७

नक्षत्रेभ्यः स्वाहा नक्षत्रियेभ्यः स्वाहाहोरात्रेभ्यः स्वाहार्धमासेभ्यः स्वाहा ।
मासेभ्यः स्वाहा ऋतुभ्यः स्वाहार्तवेभ्यः स्वाहा
संवत्सराय स्वाहा द्यावापृथिवीभ्या्ँ स्वाहा ॥१॥ ३८
चन्द्राय स्वाहा सूर्याय स्वाहा रश्मिभ्यः स्वाहा वसुभ्यः स्वाहा ।
रुद्रेभ्यः स्वाहादित्येभ्यः स्वाहा मरुद्भ्यः स्वाहा विश्वेभ्यो देवेभ्यः स्वाहा ॥२॥(१४) ३९

मूलेभ्यः स्वाहा शाखाभ्यः स्वाहा वनस्पतिभ्यः स्वाहा ।
पुष्पेभ्यः स्वाहा फलेभ्यः स्वाहौषधीभ्यः स्वाहा ॥१॥(१५) ४०

पृथिव्यै स्वाहान्तरिक्षाय स्वाहा दिवे स्वाहा सूर्याय स्वाहा ।
चन्द्राय स्वाहा नक्षत्रेभ्यः स्वाहाद्भ्यः स्वाहौषधीभ्यः स्वाहा ।
वनस्पतिभ्यः स्वाहा परिप्लवेभ्यः स्वाहा चराचरेभ्यः स्वाहा सरीसृपेभ्यः स्वाहा ॥१॥(१६) ४१

असवे स्वाहा वसवे स्वाहा विभुवे स्वाहा विवस्वते स्वाहा ।
गणश्रिये स्वाहा गणपतये स्वाहाभिभुवे स्वाहाधिपतये स्वाहा ॥१॥ ४२
शूषाय स्वाहा सꣳसर्पाय स्वाहा चन्द्राय स्वाहा ज्योतिषे स्वाहा ।
मलिम्लुचाय स्वाहा दिवा पतयते स्वाहा ॥२॥ (१७) ४३

मधवे स्वाहा माधवाय स्वाहा शुक्राय स्वाहा शुचये स्वाहा ।
नभसे स्वाहा नभस्याय स्वाहेषाय स्वाहोर्जाय स्वाहा ।
सहसे स्वाहा सहस्याय स्वाहा तपसे स्वाहा तपस्याय स्वाहाꣳहसस्पतये स्वाहा ॥१॥(१८) ४४

वाजाय स्वाहा प्रसवाय स्वाहापिजाय स्वाहा क्रतवे स्वाहा ।
स्वः स्वाहा मूर्ध्ने स्वाहा व्यश्नुविने स्वाहा ।
अन्त्याय स्वाहान्त्यायनाय स्वाहा भौवनाय स्वाहा
भुवनस्य पतये स्वाहाधिपतये स्वाहा प्रजापतये स्वाहा ॥१॥ (१९) ४५ [१४५१]

आयुर्यज्ञेन कल्पताꣳ स्वाहा प्राणो यज्ञेन कल्पताꣳ स्वाहापानो यज्ञेन कल्पताꣳ स्वाहा
व्यानो यज्ञेन कल्पताꣳ स्वाहा ।
उदानो यज्ञेन कल्पताꣳ स्वाहा समानो यज्ञेन कल्पताꣳ स्वाहा चक्षुर्यज्ञेन कल्पताꣳ स्वाहा
श्रोत्रं यज्ञेन कल्पताꣳ स्वाहा ।
वाग्यज्ञेन कल्पताꣳ स्वाहा मनो यज्ञेन कल्पताꣳ स्वाहात्मा यज्ञेन कल्पताꣳ स्वाहा
पृष्ठं यज्ञेन कल्पताꣳ स्वाहा ।
ब्रह्म यज्ञेन कल्पताꣳ स्वाहा यज्ञो यज्ञेन कल्पताꣳ स्वाहा ज्योतिर्यज्ञेन कल्पताꣳ स्वाहा
स्वर्यज्ञेन कल्पताꣳ स्वाहा ॥१॥ (२०) ४६

एकस्मै स्वाहा द्वाभ्याꣳ स्वाहा शताय स्वाहैकशताय स्वाहा ।
व्युष्ट्यै स्वाहा स्वर्गाय स्वाहा ॥१॥ (२१) ४७ [१४६१]

तेजोऽसि पञ्च ॥५॥ अग्नय एका ॥१॥ हिङ्काराय षट् ॥६॥ तत्सवितुर्दश ॥ १० ॥ अजीजनो ह्येका ॥ १ ॥
विभूर्द्वे ॥ २ ॥ काय चतस्रः ॥ ४ ॥ आब्रह्मंस्तिस्रः ॥ ३ ॥ प्राणायैका ॥ १ ॥ प्राच्यायैका ॥ १ ॥
अद्भ्य एका ॥१॥ वातायैका ॥१॥ अग्नय इत्येका ॥१॥ नक्षत्रेभ्यो द्वे ॥२॥ मूलेभ्य एका ॥१॥
पृथिव्या इत्येका ॥१॥ असवे द्वे ॥२॥ मधव एका ॥१॥ वाजायैका ॥ १ ॥
आयुर्यज्ञेनैका ॥१॥ एकस्मा इत्येका ॥१॥
॥ एकविंशत्यनुवाकेषु सप्तचत्वारिंशत् ॥४७॥

॥ इति शुक्लयजुःकाण्वसंहितायां चतुर्विंशोऽध्यायः ॥२४॥

## अथ पञ्चविंशोऽध्यायः ।

हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥१॥ १
उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णाम्येष ते योनिः सूर्यस्ते महिमा ।
यस्तेऽहन्त्संवत्सरे महिमा सम्बभूव यस्ते वायावन्तरिक्षे महिमा सम्बभूव ।
यस्ते दिवि सूर्ये महिमा सम्बभूव तस्मै ते महिम्ने प्रजापतये स्वाहा देवेभ्यः ॥२॥ (१) २

यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव ।
य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥१॥ ३ [१४६४]

उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णाम्येष ते योनिश्चन्द्रमास्ते महिमा ।
यस्ते रात्रौ संवत्सरे महिमा सम्बभूव यस्ते पृथिव्यामग्नौ महिमा सम्बभूव ।
यस्ते नक्षत्रेषु चन्द्रमसि महिमा सम्बभूव तस्मै ते महिम्ने प्रजापतये देवेभ्यः स्वाहा ॥२॥ (२) ४

युञ्जन्ति ब्रध्नमरुषं चरन्तं परि तस्थुषः । रोचन्ते रोचना दिवि ॥१॥ ५
युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे । शोणा धृष्णू नृवाहसा ॥२॥ ६
यद्वातो अपो अगनीगन्प्रियामिन्द्रस्य तन्वम् ।
एतꣳ स्तोतरनेन पथा पुनरश्वमावर्तयासि नः ॥३॥ ७
वसवस्त्वाञ्जन्तु गायत्रेण छन्दसा रुद्रास्त्वाञ्जन्तु त्रैष्टुभेन छन्दसा ।
आदित्यास्त्वाञ्जन्तु जागतेन छन्दसा ॥४॥ ८
भूर्भुवः स्वर्लाजी३ञ्छाची३न्यव्ये गव्ये ।
एतदन्नमत्त देवा एतदन्नमद्धि प्रजापते ॥५॥ ९
कः स्विदेकाकी चरति क उ स्विज्जायते पुनः ।
किꣳ स्विद्धिमस्य भेषजं किम्वावपनं महत् ॥६॥ १०
सूर्य एकाकी चरति चन्द्रमा जायते पुनः ।
अग्निर्हिमस्य भेषजं भूमिरावपनं महत् ॥७॥ ११
का स्विदासीत्पूर्वचित्तिः किꣳ स्विदासीद् बृहद्वयः ।
का स्विदासीत्पिलिप्पिला का स्विदासीत्पिशङ्गिला ॥८॥ १२
द्यौरासीत्पूर्वचित्तिरश्व आसीद् बृहद्वयः ।
अविरासीत्पिलिप्पिला रात्रिरासीत्पिशङ्गिला ॥९॥(३) १३

वायुष्टे पचतैरवत्वसितग्रीवश्छागैः । न्यग्रोधश्चमसैः शल्मलिर्वृद्ध्या ॥१॥ १४
एष स्य राथ्यो वृषा पड्भिश्चतुर्भिरेदगन् । ब्रह्माकृष्णश्च नोऽवतु नमोऽग्नये ॥२॥ १५
सꣳशितो रश्मिना रथः सꣳशितो रश्मिना हयः ।
सꣳशितो अप्स्वप्सुजा ब्रह्मा सोमपुरोगवः ॥३॥ १६
स्वयं वाजिꣳस्तन्वं कल्पयस्व स्वयं यजस्व स्वयं जुषस्व ।
महिमा तेऽन्येन न सन्नशे ॥४॥ १७
न वा उ एतन्म्रियसे न रिष्यसि देवाँ२ इदेषि पथिभिः सुगेभिः ।
यत्रासते सुकृतो यत्र ते ययुस्तत्र त्वा देवः सविता दधातु ॥५॥ १८ [१४७९]

अग्निः पशुरासीत्तेनायजन्त स एतं लोकमजयद्यस्मिन्नग्निः ।
स ते लोको भविष्यति तं जेष्यसि पिबैता अपः ।
वायुः पशुरासीत्तेनायजन्त स एतं लोकमजयद्यस्मिन्वायुः ।
स ते लोको भविष्यति तं जेष्यसि पिबैता अपः ।
सूर्यः पशुरासीत्तेनायजन्त स एतं लोकमजयद्यस्मिन्त्सूर्यः ।
स ते लोको भविष्यति तं जेष्यसि पिबैता अपः ॥६॥ (४) १९

प्राणाय स्वाहापानाय स्वाहा व्यानाय स्वाहा । अम्बे अम्बिकेऽम्बालिके न मा नयति कश्चन ।
ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम् ॥१॥ २०

गणानां त्वा गणपतिꣳ हवामहे प्रियाणां त्वा प्रियपतिꣳ हवामहे ।
निधीनां त्वा निधिपतिꣳ हवामहे वसो मम ॥२॥ २१

आहमजानि गर्भधमा त्वमजासि गर्भधम् । ता उभौ चतुरः पदः संप्रसारयाव ।
स्वर्गे लोके प्रोर्ण्वाथां वृषा वाजी रेतोधा रेतो दधातु ॥३॥ (५) २२

उत्सक्थ्या अव गुदं धेहि समञ्जिं चारया वृषन् । य स्त्रीणां जीवभोजनः ॥१॥ २३
यकासकौ शकुन्तिकाहलगिति वञ्चति । आहन्ति गभे पसो निगल्गलीति धारका ॥२॥ २४
यकोऽसकौ शकुन्तक आहलगिति वञ्चति ।
विवक्षत इव ते मुखमध्वर्यो मा नस्त्वमभि भाषथाः ॥३॥ २५
माता च ते पिता च तेऽग्रं वृक्षस्य रोहतः ।
प्रतिलामीति ते पिता गभे मुष्टिमतꣳसयत् ॥४॥ २६
माता च ते पिता च तेऽग्रं वृक्षस्य क्रीळतः ।
विवक्षत इव ते मुखं ब्रह्मन्मा त्वं वदो बहु ॥५॥ २७
ऊर्ध्वामेनामुच्छ्रापय गिरौ भारꣳ हरन्निव ।
अथास्यै मध्यमेधताꣳ शीते वाते पुनन्निव ॥६॥ २८
ऊर्ध्वमेनमुच्छ्रयताद्गिरौ भारꣳ हरन्निव ।
अथास्य मध्यमेजतु शीते वाते पुनन्निव ॥७॥ २९
यदस्या अꣳहुभेद्याः कृधु स्थूलमुपातसन् ।
मुष्का इदस्या एजतो गोशफे शकुला इव ॥८॥ ३० [१९९१]

यद्देवासो ललामगुं प्र विष्टीमिनमाविषुः ।
सक्था देदिश्यते नारी सत्यस्याक्षिभुवो यथा ॥९॥ ३१
यद्धरिणो यवमत्ति न पुष्टं पशु मन्यते ।
शूद्रा यदर्यजारा न पोषाय धनायति ॥१०॥ ३२
यद्धरिणो यवमत्ति न पुष्टं बहु मन्यते ।
शूद्रो यदर्यायै जारो न पोषमनु मन्यते ॥११॥ ३३
दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः ।
सुरभि नो मुखा करत्प्र ण आयूꣳषि तारिषत् ॥१२॥ (६) ३४

गायत्री त्रिष्टुब्जगत्यनुष्टुप्पङ्क्त्या सह ।
बृहत्युष्णिहा ककुप्सूचीभिः शम्यन्तु त्वा ॥१॥ ३५
द्विपदा याश्चतुष्पदास्त्रिपदा याश्च षट्पदाः ।
विच्छन्दा याश्च सच्छन्दाः सूचीभिः शम्यन्तु त्वा ॥२॥ ३६
महानाम्न्यो रेवत्यो विश्वा आशाः प्रभूवरीः ।
मैघीर्विद्युतो वाचः सूचीभिः शम्यन्तु त्वा ॥३॥ ३७
नार्यस्ते पत्न्यो लोम विचिन्वन्तु मनीषया ।
देवानां पत्न्यो दिशः सूचीभिः शम्यन्तु त्वा ॥४॥ ३८
रजता हरिणीः सीसा युजो युज्यन्ते कर्मभिः ।
अश्वस्य वाजिनस्त्वचि सिमाः शम्यन्तु शम्यन्तीः ॥५॥ ३९
कुविदङ्ग यवमन्तो यवंश्चिद्यथा दान्त्यनुपूर्वं वियूय ।
इहेहैषां कृणुहि भोजनानि ये बर्हिषो नम उक्तिं न जग्मुः ॥६॥ (७) ४०

कस्त्वा छ्यति कस्त्वा विशास्ति कस्ते गात्राणि शम्यति । क उ ते शमिता कविः॥१॥४१
ऋतवस्त ऋतुथा पर्व शमितारो वि शासतु ।
संवत्सरस्य तेजसा शमीभिः शम्यन्तु त्वा ॥२॥ ४२
अर्धमासाः परूꣳषि ते मासा आ छ्यन्तु शम्यन्तः ।
अहोरात्राणि मरुतो विलिष्टꣳ सूदयन्तु ते ॥३॥ ४३
दैव्या अध्वर्यवस्त्वा छ्यन्तु वि च शासतु ।
गात्राणि पर्वशस्ते सिमाः कृण्वन्तु शम्यन्तीः ॥४॥ ४४ [१५०५]

द्यौस्ते पृथिव्यन्तरिक्षं वायुश्छिद्रं पृणातु ते ।
सूर्यस्ते नक्षत्रैः सह लोकं कृणोतु साधुया ॥५॥ ४५
शं ते परेभ्यो गात्रेभ्यः शमस्त्ववरेभ्यः ।
शमस्थभ्यो मज्जभ्यः शम्वस्तु तन्वै तव ॥६॥ (८) ४६

कः स्विदेकाकी चरति क उ स्विज्जायते पुनः ।
किꣳ स्विद्धिमस्य भेषजं किम्वावपनं महत् ॥१॥ ४७
सूर्य एकाकी चरति चन्द्रमा जायते पुनः ।
अग्निर्हिमस्य भेषजं भूमिरावपनं महत् ॥२॥ ४८
किꣳ स्वित्सूर्यसमं ज्योतिः किꣳ समुद्रसमꣳ सरः ।
किꣳ स्वित्पृथिव्यै वर्षीयः कस्य मात्रा न विद्यते ॥३॥ ४९
ब्रह्म सूर्यसमं ज्योतिर्द्यौः समुद्रसमꣳ सरः ।
इन्द्रः पृथिव्यै वर्षीयान् गोस्तु मात्रा न विद्यते ॥४॥ ५०
पृच्छामि त्वा चितये देवसख यदि त्वमत्र मनसा जगन्थ ।
येषु विष्णुस्त्रिषु पदेष्वेष्टस्तेषु विश्वं भुवनमा विवेशा३ ॥५॥ ५१
अपि तेषु त्रिषु पदेष्वस्मि येषु विश्वं भुवनमा विवेश ।
सद्यः पर्येमि पृथिवीमुत द्यामेकेनाङ्गेन दिवो अस्य पृष्ठम् ॥६॥ ५२
केष्वन्तः पुरुष आ विवेश कान्यन्तः पुरुषे अर्पितानि ।
एतद् ब्रह्मन्नुप वहामसि त्वा किꣳ स्विन्नः प्रति वोचास्यत्र ॥७॥ ५३
पञ्चस्वन्तः पुरुष आ विवेश तान्यन्तः पुरुषे अर्पितानि ।
एतत्त्वात्र प्रतिमन्वानो अस्मि न मायया भवस्युत्तरो मत् ॥८॥ (९) ५४

का स्विदासीत्पूर्वचित्तिः किꣳ स्विदासीद् बृहद्वयः ।
का स्विदासीत्पिलिप्पिला का स्विदासीत्पिशङ्गिला ॥१॥ ५५
द्यौरासीत्पूर्वचित्तिरश्व आसीद् बृहद्वयः ।
अविरासीत्पिलिप्पिला रात्रिरासीत्पिशङ्गिला ॥२॥ ५६
का ईमरे पिशङ्गिला का ईं कुरु पिशङ्गिला ।
क ईमा स्कन्दमर्षति क ईं पन्थां वि सर्पति ॥३॥ ५७ [१५१८]

अजारे पिशङ्गिला श्वावित्कुरु पिशङ्गिला ।
शश आस्कन्दमर्षत्यहिः पन्थां वि सर्पति ॥४॥ ५८

कत्यस्य विष्ठाः कत्यक्षराणि कति होमासः कतिधा समिद्धः ।
यज्ञस्य त्वा विदथा पृच्छमत्र कति होतार ऋतुशो यजन्ति ॥५॥ ५९

षळस्य विष्ठाः शतमक्षराण्यशीतिर्होमाः समिधो ह तिस्रः ।
यज्ञस्य ते विदथा प्र ब्रवीमि सप्त होतार ऋतुशो यजन्ति ॥६॥ ६०

को अस्य वेद भुवनस्य नाभिं को द्यावापृथिवी अन्तरिक्षम् ।
कः सूर्यस्य वेद बृहतो जनित्रं को वेद चन्द्रमसं यतोजाः ॥७॥ ६१

वेदाहमस्य भुवनस्य नाभिं वेद द्यावापृथिवी अन्तरिक्षम् ।
वेद सूर्यस्य बृहतो जनित्रमथो वेद चन्द्रमसं यतोजाः ॥८॥ ६२

पृच्छामि त्वा परमन्तं पृथिव्याः पृच्छामि यत्र भुवनस्य नाभिः ।
पृच्छामि त्वा वृष्णो अश्वस्य रेतः पृच्छामि वाचः परमं व्योम ॥९॥ ६३

इयं वेदिः परो अन्तः पृथिव्या अयं यज्ञो भुवनस्य नाभिः ।
अयꣳ सोमो वृष्णो अश्वस्य रेतो ब्रह्मायं वाचः परमं व्योम ॥१०॥ ६४

सुभूः स्वयम्भूः प्रथमोऽन्तर्महत्यर्णवे ।
दधे ह गर्भमृत्वियं यतो जातः प्रजापतिः ॥११॥ ६५

होता यक्षत्प्रजापतिꣳ सोमस्य महिम्नः ।
जुषतां पिबतु सोमꣳ होतर्यज ॥१२॥ ६६

प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परि ता बभूव ।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयꣳ स्याम पतयो रयीणाम् ॥१३॥(१०) ६७ [१५१८]

हिरण्यगर्भो द्वे ॥ २ ॥ यः प्राणतो द्वे ॥ २ ॥ युञ्जन्ति नव ॥ ९ ॥ वायुष्ट्वा पद् ॥ ६ ॥ प्राणाय तिस्रः ॥ ३ ॥
उत्सक्थ्या द्वादश ॥१२॥ गायत्री षट् ॥६॥ कस्त्वा षट् ॥६॥ कः स्विदष्ट ॥८॥ का स्विद् त्रयोदश ॥ १३ ॥
॥ दशानुवाकेषु सप्तषष्टिः ॥ ६७ ॥

॥ इति शुक्लयजुःकाण्वसंहितायां पञ्चविंशोऽध्यायः ॥ २५ ॥

## अथ षड्विंशोऽध्यायः।

अश्वस्तूपरो गोमृगस्ते प्राजापत्याः कृष्णग्रीव आग्नेयो रराटे।
पुरस्तात्सारस्वती मेष्यधस्ताद्धन्वोः ॥१॥ १
आश्विना अधोरामौ बाह्वोः सौमापौष्णः श्यामो नाभ्यां॒ सौर्ययामौ।
श्वेतश्च कृष्णश्च पार्श्वयोः ॥२॥ २
त्वाष्ट्रौ लोमशसक्थौ सक्थ्योर्वायव्यः श्वेतः पुच्छ इन्द्राय स्वपस्याय वेहद्वैष्णवो वामनः।
रोहितो धूम्ररोहितः कर्कन्धुरोहितस्ते सौम्या बभ्रुररुणबभ्रुः शुकबभ्रुस्ते वारुणाः ॥३॥ ३
शितिरन्ध्रोऽन्यतःशितिरन्ध्रः समन्तशितिरन्ध्रस्ते सावित्राः शितिबाहुरन्यतः
शितिबाहुः समन्तशितिबाहुस्ते बार्हस्पत्याः।
पृषती क्षुद्रपृषती स्थूलपृषती ता मैत्रावरुण्यः ॥४॥ ४
शुद्धवालः सर्वशुद्धवालो मणिवालस्त आश्विनाः।
श्येतः श्येताक्षोऽरुणस्ते रुद्राय पशुपतये कर्णायामाः ॥५॥ ५
अवलिप्ता रौद्रा नभोरूपाः पार्जन्याः। पृश्निस्तिरश्चीनपृश्निरूर्ध्वपृश्निस्ते मारुताः ॥६॥ ६
फल्गूर्लोहितोर्णी पलक्षी ताः सारस्वत्यः।
प्लीहाकर्णः शुण्ठाकर्णोऽध्यालोहकर्णस्ते त्वाष्ट्राः ॥७॥ ७
कृष्णग्रीवः शितिकक्षोऽञ्जिसक्थस्त ऐन्द्राग्नाः।
कृष्णाञ्जिरल्पाञ्जिर्महाञ्जिस्त उषस्याः ॥८॥ ८
शिल्पा वैश्वदेव्यो रोहिण्यस्त्र्यवयो वाचेऽविज्ञाता अदित्यै।
सरूपा धात्रे वत्सतर्यो देवानां पत्नीभ्यः ॥९॥ (२) ९

कृष्णग्रीवा आग्नेयाः शितिभ्रवो वसूना॒ रोहिता रुद्राणाम्।
श्वेता अवरोकिण आदित्यानां नभोरूपाः पार्जन्याः ॥१॥ १०
उन्नत ऋषभो वामनस्त ऐन्द्रावैष्णवा उन्नतः शितिबाहुः शितिपृष्ठस्त ऐन्द्राबार्हस्पत्याः।
शुकरूपा वाजिनाः कल्माषा आग्निमारुताः श्यामाः पौष्णाः ॥२॥ ११
एता ऐन्द्राग्ना द्विरूपा अग्नीषोमीया वामना अनड्वाह आग्नावैष्णवाः।
वशा मैत्रावरुण्योऽन्यत एन्यो मैत्र्यः ॥३॥ १२
कृष्णग्रीवा आग्नेया बभ्रवः सौम्याः श्वेता वायव्या अविज्ञाता अदित्यै।
सरूपा धात्रे वत्सतर्यो देवानां पत्नीभ्यः ॥४॥ १३ [१५४२]

कृष्णा भौमा धूम्रा आन्तरिक्षा बृहन्तो दिव्याः ।
शबला वैद्युताः सिध्मास्तारकाः ॥५॥ (२) १४

धूम्रान्वसन्तायालभते श्वेतान्ग्रीष्माय कृष्णान्वर्षाभ्योऽरुणाञ्छरदे ।
पृषतो हेमन्ताय पिशङ्गाञ्छिशिराय ॥१॥ १५
त्र्यवयो गायत्र्यै पञ्चावयस्त्रिष्टुभे दित्यवाहो जगत्यै ।
त्रिवत्सा अनुष्टुभे तुर्यवाह उष्णिहे ॥२॥ १६
पष्ठवाहो विराज उक्षाणो बृहत्या ऋषभाः ककुभे ।
अनड्वाहः पङ्क्त्यै धेनवोऽतिच्छन्दसे ॥३॥ १७
कृष्णग्रीवा आग्नेया बभ्रवः सौम्या उपध्वस्ताः सावित्रा वत्सतर्यः सारस्वत्यः श्यामाः पौष्णाः।
पृश्नयो मारुता बहुरूपा वैश्वदेवा वशा द्यावापृथिवीयाः ॥४॥ १८
उक्ताः संचरा एता ऐन्द्राग्नाः ।
कृष्णा वारुणाः पृश्नयो मारुताः कायास्तूपराः ॥५॥ (३) १९

अग्नयेऽनीकवते प्रथमजानालभते मरुद्भ्यः सान्तपनेभ्यः सवात्यान्मरुद्भ्यो गृहमेधिभ्यो बष्किहान् ।
मरुद्भ्यः क्रीळिभ्यः सꣳसृष्टान्मरुद्भ्यः स्वतवद्भ्योऽनुसृष्टान् ॥१॥ २०
उक्ताः संचरा एता ऐन्द्राग्नाः । प्राशृङ्गा माहेन्द्रा बहुरूपा वैश्वकर्मणाः ॥२॥ २१
धूम्रा बभ्रुनीकाशाः पितृणाꣳ सोमवतां बभ्रवो धूम्रनीकाशाः पितृणां बर्हिषदाम् ।
कृष्णा बभ्रुनीकाशाः पितृणामग्निष्वात्तानां कृष्णाः पृषन्तस्त्रैयम्बकाः ॥३॥ २२
उक्ताः संचरा एताः शुनासीरीयाः । श्वेता वायव्याः श्वेताः सौर्याः ॥४॥ २३
वसन्ताय कपिञ्जलानालभते ग्रीष्माय कलविङ्कान्वर्षाभ्यस्तित्तिरीञ्छरदे वर्तिकाः ।
हेमन्ताय ककराञ्छिशिराय विककरान् ॥५॥ (४) २४

समुद्राय शिशुमारानालभते पर्जन्याय मण्डूकानद्भ्यो मत्स्यान् ।
मित्राय कुलीपयान्वरुणाय नाक्रान् ॥१॥ २५
सोमाय हꣳसानालभते वायवे बलाका इन्द्राग्निभ्यां क्रुञ्चान् ।
मित्राय मद्गून्वरुणाय चक्रवाकान् ॥२॥ २६
अग्नये कुटरूनालभते वनस्पतिभ्य उलूकानग्नीषोमाभ्यां चाषान् ।
अश्विभ्यां मयूरान्मित्रावरुणाभ्यां कपोतान् ॥३॥ २७ [१५५५]

सोमाय लबानालभते त्वष्ट्रे कौलीकान्गोषादीर्देवानां पत्नीभ्यः ।
कुलीका देवजामिभ्योऽग्नये गृहपतये पारुष्णान् ॥४॥ २८
अह्ने पारावतानालभते रात्र्यै सीचापूरहोरात्रयोः संधिभ्यो जतूः ।
मासेभ्यो दात्यौहान्त्संवत्सराय महतः सुपर्णान् ॥५॥ (५) २९

भूम्या आखूनालभतेऽन्तरिक्षाय पाङ्क्त्रान्दिवे कशान् ।
दिग्भ्यो नकुलान्बभ्रुकानवान्तरदिशाभ्यः ॥१॥ ३०
वसुभ्य ऋश्यानालभते रुद्रेभ्यो रुरूनादित्येभ्यो न्यङ्कून् ।
विश्वेभ्यो देवेभ्यः पृषतान्त्साध्येभ्यः कुलुङ्गान् ॥२॥ ३१
ईशानाय परस्वत आलभते मित्राय गौरान्वरुणाय महिषान् ।
बृहस्पतये गवयाꣳस्त्वष्ट्र उष्ट्रान् ॥३॥ ३२
प्रजापतये पुरुषान् हस्तिन आलभते वाचे प्लुषीन् ।
चक्षुषे मशकाञ्छ्रोत्राय भृङ्गाः ॥४॥ ३३
प्रजापतये च वायवे च गोमृगो वरुणायारण्यो मेषो यमाय कृष्णो मनुष्यराजाय मर्कटः ।
शार्दूलाय रोहिदृषभाय गवयी क्षिप्रश्येनाय वर्तिका नीलङ्गोः क्रिमिः समुद्राय
शिशुमारो हिमवते हस्ती ॥५॥ (६) ३४

मयुः प्राजापत्य उलो हलिक्ष्णो वृषदꣳशस्ते धात्रे दिशां कङ्को धुङ्क्षाग्नेयी ।
कलविङ्को लोहिताहिः पुष्करसादस्ते त्वाष्ट्रा वाचे क्रुञ्चः ॥१॥ ३५
सोमाय कुलुङ्ग आरण्योऽजो नकुलः शका ते पौष्णाः क्रोष्टा मायोरिन्द्रस्य गौरमृगः ।
पिद्वो न्यङ्कुः कक्कटस्तेऽनुमत्यै प्रतिश्रुत्कायै चक्रवाकः ॥२॥ ३६
सौरी बलाका शार्गः सृजयः शयाण्डकस्ते मैत्राः सरस्वत्यै शारिः पुरुषवाक् श्वाविद्भौमी ।
शार्दूलो वृकः पृदाकुस्ते मन्यवे सरस्वते शुकः पुरुषवाक् ॥३॥ ३७
सुपर्णः पार्जन्य आतिर्वाहसो दर्विदा ते वायवे बृहस्पतये वाचस्पतये पैङ्गराजोऽलज आन्तरिक्षः ।
प्लवो मद्गुर्मत्स्यस्ते नदीपतये द्यावापृथिवीयः कूर्मः ॥४॥ ३८
पुरुषमृगश्चन्द्रमसो गोधा कालका दार्वाघाटस्ते वनस्पतीनां कृकवाकुः सावित्रो हꣳसो वातस्य ।
नाक्रो मकरः कुलीपयस्तेऽकूपारस्य ह्रियै शल्यकः ॥५॥ (७) ३९

एण्यह्नो मण्डूको मूषिका तित्तिरिस्ते सर्पाणां लोपाश आश्विनः कृष्णो रात्र्यै ।
ऋक्षो जतूः सुषिलीका त इतरजनानां जहका वैष्णवी ॥१॥ ४० [१५६८]

अन्यवापोऽर्धमासानामृश्यो मयूरः सुपर्णस्ते गन्धर्वाणामपामुद्रो मासां कश्यपः ।
रोहित्कुण्डृणाची गोलत्तिका तेऽप्सरसां मृत्यवेऽसितः ॥२॥ ४१
वर्षाहूर्ऋतूनामाखुः कशो मान्थालस्ते पितॄणां बलायाजगरो वसूनां कपिञ्जलः ।
कपोत उलूकः शशस्ते निर्ऋत्यै वरुणायारण्यो मेषः ॥३॥ ४
श्वित्र आदित्यानामुष्ट्रो घृणीवान्वार्ध्रीनसस्ते मत्या अरण्याय सृमरो रुरू रौद्रः ।
क्वयिः कुटरुर्दात्यौहस्ते वाजिनां कामाय पिकः ॥४॥ ४
खड्गो वैश्वदेवः श्वा कृष्णः कर्णो गर्दभस्तरक्षुस्ते रक्षसामिन्द्राय सूकरः ।
सिंहो मारुतः कृकलासः पिप्पका शकुनिस्ते शरव्यायै विश्वेषां देवानां पृषतः॥५॥(८)४४ [१५७

अश्वस्तूपरो नव ॥ ९ ॥ कृष्णग्रीवा पञ्च ॥ ५ ॥ धूम्रान्वसन्ताय पञ्च ॥ ५ ॥ अग्नयेऽनीकवते पञ्च ॥ ५ ॥ समुद्राय शिशुमारान् पञ्च ॥ ५ ॥ भूम्या आखून् पञ्च ॥ ५ ॥ मयुः प्राजापत्य पञ्च ॥ ५ ॥ पण्यह इति पञ्च ॥ ५ ॥
॥ अष्टानुवाकेषु चतुश्चत्वारिंशत् ॥ ४४ ॥
॥ इति शुक्लयजुःकाण्वसंहितायां षड्विंशोऽध्यायः ॥ २६ ॥

## अथ सप्तविंशोऽध्यायः ।

शादं दद्भिरवकां दन्तमूलैर्मृदं बर्स्वैस्तेगान्दंष्ट्राभ्याꣳ सरस्वत्या अग्रजिह्वं जिह्वाया उत्सादम् ।
अवक्रन्देन तालु वाजꣳ हनुभ्यामप आस्येन वृषणमाण्डाभ्याम् ॥१॥ १
आदित्यान् श्मश्रुभिः पन्थानं भ्रूभ्यां द्यावापृथिवी वर्तोभ्यां विद्युतं कनीनकाभ्याम् ।
शुक्लाय स्वाहा कृष्णाय स्वाहा पार्याणि पक्ष्माण्यवार्या इक्षवोऽवार्याणि पक्ष्माणि
पार्या इक्षवः ॥२॥ (१) २

वातं प्राणेनापानेन नासिके उपयाममधरेणौष्ठेन सदुत्तरेण ।
प्रकाशेनान्तरमनूकाशेन बाह्यं निवेष्यं मूर्ध्ना स्तनयित्नुं निर्बाधेनाशनिं मस्तिष्केण विद्युतं
कनीनकाभ्याम् ॥१॥ ३
कर्णाभ्याꣳ श्रोत्रꣳ श्रोत्राभ्यां कर्णौ तेदनीमधरकण्ठेनापः शुष्ककण्ठेन चित्तं मन्याभिः ।
अदितिꣳ शीर्ष्णा निर्ऋतिं निर्जर्जल्येन शीर्ष्णा संक्रोशैः प्राणान् रेष्माणꣳ स्तुपेन ॥२॥ (२) ४

मशकान्केशैरिन्द्रꣳ स्वपसा वहेन बृहस्पतिꣳ शकुनिसादेन कूर्मान् ।
शफैराक्रमणꣳ स्थूराभ्यामृक्षलाभिः कपिञ्जलान् ॥१॥ ५ [१५७७]

जवं जङ्घाभ्यामध्वानं बाहुभ्यां जाम्बीलेनारण्यमग्निमतिरुग्भ्याम् ।
पूषणं दोर्भ्यामश्विना अꣳसाभ्याꣳ रुद्रꣳ रोराभ्याम् ॥२॥ (३) ६

अग्नेः पक्षतिर्वायोर्निपक्षतिरिन्द्रस्य तृतीयापां चतुर्थी ।
अदित्यै पञ्चमीन्द्राण्यै षष्ठी मरुताꣳ सप्तमी बृहस्पतेरष्टमी ।
अर्यम्णो नवमी धातुर्दशमीन्द्रस्यैकादशी वरुणस्य द्वादशी यमस्य त्रयोदशी॥१॥ (४) ७

इन्द्राग्न्योः पक्षतिः सरस्वत्यै निपक्षतिर्मित्रस्य तृतीया सोमस्य चतुर्थी ।
निर्ऋत्यै पञ्चम्यग्नीषोमयोः षष्ठी सर्पाणाꣳ सप्तमी विष्णोरष्टमी ।
पूष्णो नवमी त्वष्टुर्दशमीन्द्रस्यैकादशी वरुणस्य द्वादशी यम्यै त्रयोदशी ।
द्यावापृथिव्योर्दक्षिणं पार्श्वं विश्वेषां देवानामुत्तरम् ॥१॥ (५) ८

मरुताꣳ स्कन्धा विश्वेषां देवानां प्रथमा कीकसा रुद्राणां द्वितीयादित्यानां तृतीया वायोः पुच्छ-
मग्नीषोमयोर्भासदौ । क्रुञ्चौ श्रोणिभ्यामिन्द्राबृहस्पती ऊरुभ्यां मित्रावरुणा अल्गाभ्यामाक्रमणꣳ
स्थूराभ्यां बलं कुष्ठाभ्याम् ॥१॥ (६) ९

पूषणं वनिष्ठुनान्धाहीन्स्थूलगुदया सर्पान्गुदाभिर्विहुतं आन्त्रैरपो वस्तिना वृषणमाण्डाभ्याम् ।
वाजिनꣳ शेपेन प्रजाꣳ रेतसा चाषान्पित्तेन प्रदरान्पायुना कूश्माञ्छकपिण्डैः ॥१॥ (७) १०

इन्द्रस्य क्रोडोऽदित्यै पाजस्यं दिशां जत्रवोऽदित्यै भसत् ।
जीमूतान्हृदयौपशेनान्तरिक्षं पुरीतता ॥१॥ ११
नभ उदर्येण चक्रवाकौ मतस्नाभ्यां दिवं वृक्काभ्यां गिरीन्प्लाशिभिः ।
उपलान्प्लीह्ना वल्मीकान्क्लोमभिर्ग्लौभिर्गुल्मान्हिराभिः स्रवन्तीः ।
ह्रदान्कुक्षिभ्याꣳ समुद्रमुदरेण वैश्वानरं भस्मना ॥२॥ (८) १२

विधृतिं नाभ्या घृतꣳ रसेनापो यूष्णा मरीचीर्विप्रुड्भिर्नीहारमूष्मणा शीनं वसया प्रुष्वा अश्रुभिः ।
ह्रादुनीर्दूषीकाभिरस्ना रक्षाꣳसि चित्राण्यङ्गैर्नक्षत्राणि रूपेण पृथिवीं त्वचा जुम्बकाय
स्वाहा ॥१॥ (९) १३

हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत् ।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥१॥ १४
यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव ।
य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥२॥ १५ [१५८७]

यस्येमे हिमवन्तो महित्वा यस्य समुद्रꣳ रसया सहाहुः ।
यस्येमाः प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम ॥३॥ १६

य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः ।
यस्य छायामृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम ॥४॥ (१०) १७

आ नो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासो अपरीतास उद्भिदः ।
देवा नो यथा सदमिद् वृधे असन्नप्रायुवो रक्षितारो दिवेदिवे ॥१॥ १८

देवानां भद्रा सुमतिर्ऋजूयतां देवानाꣳ रातिरभि नो निवर्तताम् ।
देवानाꣳ सख्यमुपसेदिमा वयं देवा न आयुः प्रतिरन्तु जीवसे ॥२॥ १९

तान्पूर्वया निविदा हूमहे वयं भगं मित्रमदितिं दक्षमस्रिधम् ।
अर्यमणं वरुणꣳ सोममश्विना सरस्वती नः सुभगा मयस्करत् ॥३॥ २०

तन्नो वातो मयोभु वातु भेषजं तन्माता पृथिवी तत्पिता द्यौः ।
तद् ग्रावाणः सोमसुतो मयोभुवस्तदश्विना शृणुतं धिष्ण्या युवम् ॥४॥ २१

तमीशानं जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे वयम् ।
पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये ॥५॥ २२

स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥६॥ २३

पृषदश्वा मरुतः पृश्निमातरः शुभंयावानो विदथेषु जग्मयः ।
अग्निजिह्वा मनवः सूरचक्षसो विश्वे नो देवा अवसागमन्निह ॥७॥ २४

भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेम देवहितं यदायुः ॥८॥ २५

शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् ।
पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः ॥९॥ २६

अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः ।
विश्वे देवा अदितिः पञ्च जना अदितिर्जातमदितिर्जनित्वम् ॥१०॥ (११) २७

मा नो मित्रो वरुणो अर्यमायुरिन्द्र ऋभुक्षा मरुतः परिख्यन् ।
यद्वाजिनो देवजातस्य सप्तेः प्रवक्ष्यामो विदथे वीर्याणि ॥१॥ २८ [१६००]

यन्निर्णिजा रेक्णसा प्रावृतस्य रातिं गृभीतां मुखतो नयन्ति ।
सुप्राङजो मेम्यद्विश्वरूप इन्द्रापूष्णोः प्रियमप्येति पाथः ॥२॥ २९
एष च्छागः पुरो अश्वेन वाजिना पूष्णो भागो नीयते विश्वदेव्यः ।
अभिप्रियं यत्पुरोळाशमर्वता त्वष्टेदेनꣳ सौश्रवसाय जिन्वति ॥३॥ ३०
यद्धविष्यमृतुशो देवयानं त्रिर्मानुषाः पर्यश्वं नयन्ति ।
अत्रा पूष्णः प्रथमो भाग एति यज्ञं देवेभ्यः प्रतिवेदयन्नजः ॥४॥ ३१
होताध्वर्युरावया अग्निमिन्धो ग्रावग्राभ उत शꣳस्ता सुविप्रः ।
तेन यज्ञेन स्वरंकृतेन स्विष्टेन वक्षणा आ पृणध्वम् ॥५॥ ३२
यूपव्रस्का उत ये यूपवाहाश्चषालं ये अश्वयूपाय तक्षति ।
ये चार्वते पचनꣳ संभरन्त्युतो तेषामभिगूर्तिर्न इन्वतु ॥६॥ ३३
उप प्रागात्सुमन्मेऽधायि मन्म देवानामाशा उप वीतपृष्ठः ।
अन्वेनं विप्रा ऋषयो मदन्ति देवानां पुष्टे चकृमा सुबन्धुम् ॥७॥ ३४
यद्वाजिनो दाम संदानमर्वतो या शीर्षण्या रशना रज्जुरस्य ।
यद्वा घास्य प्रभृतमास्ये तृणꣳ सर्वा ता ते अपि देवेष्वस्तु ॥८॥ (१२) ३५

यदश्वस्य क्रविषो मक्षिकाश यद्वा स्वरौ स्वधितौ रिप्तमस्ति ।
यद्धस्तयोः शमितुर्यन्नखेषु सर्वा ता ते अपि देवेष्वस्तु ॥१॥ ३६
यदूवध्यमुदरस्यापवाति य आमस्य क्रविषो गन्धो अस्ति ।
सुकृता तच्छमितारः कृण्वन्तूत मेधꣳ शृतपाकं पचन्तु ॥२॥ ३७
यत्ते गात्रादग्निना पच्यमानादभि शूलं निहतस्यावधावति ।
मा तद्भूम्यामाश्रिषन्मा तृणेषु देवेभ्यस्तदुशद्भ्यो रातमस्तु ॥३॥ ३८
ये वाजिनं परिपश्यन्ति पक्वं य ईमाहुः सुरभिर्निर्हरेति ।
ये चार्वतो माꣳसभिक्षामुपासत उतो तेषामभिगूर्तिर्न इन्वतु ॥४॥ ३९
यन्नीक्षणं माꣳस्पचन्या उखाया या पात्राणि यूष्ण आसेचनानि ।
ऊष्मण्यापिधाना चरूणामङ्काः सूनाः परि भूषन्त्यश्वम् ॥५॥ ४०
मा त्वाग्निर्ध्वनयीद्धूमगन्धिर्मोखा भ्राजन्त्यभि विक्त जघ्रिः ।
इष्टं वीतमभिगूर्तं वषट्कृतं तं देवासः प्रति गृभ्णन्त्यश्वम् ॥६॥ ४१ [२३१३]

निक्रमणं निषदनं विवर्तनं यच्च पड्वीशमर्वतः ।
यच्च पपौ यच्च घासिं जघास सर्वा ता ते अपि देवेष्वस्तु ॥७॥ (१३) ४२

यदश्वाय वास उपस्तृणन्त्यधीवासं या हिरण्यान्यस्मै ।
संदानमर्वन्तं पड्वीशं प्रिया देवेष्वा यामयन्ति ॥१॥ (१४) ४३

इमा नु कं भुवना सीषधामेन्द्रश्च विश्वे च देवाः ।
आदित्यैरिन्द्रः सगणो मरुद्भिरस्मभ्यं भेषजा करत् ।
यज्ञं च नस्तन्वं च प्रजां चादित्यैरिन्द्रः सह सीषधाति ॥१॥ ४४
अग्ने त्वं नो अन्तम उत त्राता शिवो भवा वरूथ्यः ।
वसुरग्निर्वसुश्रवा अच्छा नक्षि द्युमत्तमꣳ रयिं दाः ।
तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः ॥२॥ (१५) ४५ [१३१७]

शादं दद्भिर्द्वे ॥२॥ वातं प्राणेन द्वे ॥२॥ मशकान्केशैरिति द्वे ॥ २ ॥ अग्नेः पक्षतिरेका ॥१॥ इन्द्राग्न्योः पक्षतिरेका ॥१॥ मारुताꣳ स्कन्धा एका ॥१॥ पूषणं वनिष्ठुनेत्येका ॥१॥ इन्द्रस्य क्रोडो द्वे ॥२॥ विधृतिमेका ॥१॥ हिरण्यगर्भश्चतस्रः ॥४॥ आ नो दश ॥१०॥ मा नोऽष्ट ॥८॥ यदश्वस्य सप्त ॥७॥ यदश्वायैका ॥१॥ इमा नु कं द्वे ॥२॥
पञ्चदशानुवाकेषु पञ्चचत्वारिंशत् ॥४५॥

॥ इति शुक्लयजुःकाण्वसंहितायां सप्तविंशोऽध्यायः ॥२७॥

## अथाष्टाविंशोऽध्यायः ।

अग्निश्च पृथिवी च संनते ते मे सं नमतामदो वायुश्चाऽन्तरिक्षं च संनते ते मे सं नमतामद
आदित्यश्च द्यौश्च संनते ते मे सं नमतामद आपश्च वरुणश्च संनते ते मे सं नमतामदः ।
सप्त सꣳसदो अष्टमी भूतसाधनी ॥१॥ १
सकामाँ२ अध्वनस्कुरु संज्ञानमस्तु मेऽमुना ।
यथेमां वाचं कल्याणीमावदानि जनेभ्यः ॥२॥ २
ब्रह्मराजन्याभ्याꣳ शूद्राय चार्याय च स्वाय चारणाय च ।
प्रियो देवानां दक्षिणायै दातुरिह भूयासमयं मे कामः समृध्यतामुप मादो नमतु ॥३॥ (१) ३

बृहस्पते अति यदर्यो अर्हाद् द्युमद्विभाति क्रतुमज्जनेषु ।
यद्दीदयच्छवस ऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम् ।
उपयामगृहीतोऽसि बृहस्पतये त्वैष ते योनिर्बृहस्पतये त्वा ॥१॥ (२) ४ [१३२१]

इन्द्र गोमन्निहा याहि पिबा सोमꣳ शतक्रतो । विद्यद्भिर्ग्रावभिः सुतम् ।
उपयामगृहीतोऽसीन्द्राय त्वा गोमत एष ते योनिरिन्द्राय त्वा गोमते ॥१॥ (३) ५

ऋतावानं वैश्वानरमृतस्य ज्योतिषस्पतिम् । अजस्रं घर्ममीमहे ।
उपयामगृहीतोऽसि वैश्वानराय त्वैष ते योनिर्वैश्वानराय त्वा ॥१॥ (४) ६

वैश्वानरꣳ हवामह ऋतस्य ज्योतिषस्पतिम् । अजस्रं घर्ममीमहे ।
उपयामगृहीतोऽसि वैश्वानराय त्वैष ते योनिर्वैश्वानराय त्वा ॥१॥ (५) ७

वैश्वानरो न ऊतय आ प्र यातु परावतः । अग्निरुक्थेन वाहसा ।
उपयामगृहीतोऽसि वैश्वानराय त्वैष ते योनिर्वैश्वानराय त्वा ॥१॥ (६) ८

वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः ।
इतो जातो विश्वमिदं वि चष्टे वैश्वानरो यतते सूर्येण ।
उपयामगृहीतोऽसि वैश्वानराय त्वैष ते योनिर्वैश्वानराय त्वा ॥१॥ (७) ९

मरुत्वाँ२ इन्द्र वृषभो रणाय पिबा सोममनुष्वधं मदाय ।
आसिञ्चस्व जठरे मध्व ऊर्मिं त्वꣳ राजासि प्रतिपत्सुतानाम् ।
उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते ॥१॥ (८) १०

महाँ२ इन्द्रो वज्रहस्तः षोळशी शर्म यच्छतु । हन्तु पाप्मानं योऽस्मान्द्वेष्टि ।
उपयामगृहीतोऽसीन्द्राय त्वा षोळशिन एष ते योनिरिन्द्राय त्वा षोळशिने ॥१॥ (९) ११

अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः । तमीमहे महागयम् ॥१॥ (१०) १२

अनु वीरैरनु पुष्यास्म गोभिरन्वश्वैरनु सर्वेण पुष्टैः ।
अनु द्विपदानु चतुष्पदा वयं देवा नो यज्ञमृतुथा नयन्तु ॥१॥ (११) १३

आ नो गोत्रा दर्दृहि गोपते गाः समस्मभ्यꣳ सनयो यन्तु वाजाः ।
दिवक्षा असि वृषभ सत्यशुष्मोऽस्मभ्यꣳ सुमघवन् बोधि गोदाः ॥१॥ (१२) १४ [१६३१]

अग्निश्च तिस्रः ॥३॥ बृहस्पत एका ॥१॥ इन्द्र गोमन्नेका ॥१॥ ऋतावानमेका ॥१॥ वैश्वानरमेका ॥१॥ वैश्वानर एका ॥१॥ वैश्वानरस्य सुमतावेका ॥१॥ मरुत्वाँ२ इन्द्र एका ॥१॥ महाँ२ इन्द्र एका ॥१॥ अग्निर्ऋषिरेका ॥१॥ अनुवीरैरेका ॥१॥ आ नो गोत्रा इत्येका ॥१॥ द्वादशानुवाकेषु चतुर्दश ॥१४॥

॥ इति शुक्लयजुःकाण्वसंहितायां अष्टाविंशोऽध्यायः ॥ २८ ॥

## अथैकोनत्रिंशोऽध्यायः ।

समास्त्वाग्न ऋतवो वर्धयन्तु संवत्सरा ऋषयो यानि सत्या ।
सं दिव्येन दीदिहि रोचनेन विश्वा आ भाहि प्रदिशश्चतस्रः ॥१॥ १
सं चेध्यस्वाग्ने प्र च बोधयैनमुच्च तिष्ठ महते सौभगाय ।
मा च रिषदुपसत्ता ते अग्ने ब्रह्माणस्ते यशसः सन्तु मान्ये ॥२॥ २
त्वामग्ने वृणते ब्राह्मणा इमे शिवो अग्ने संवरणे भवा नः ।
सपत्नहा नो अभिमातिजिच्च स्वे गये जागृह्यप्रयुच्छन् ॥३॥ ३
इहैवाग्ने अधि धारया रयिं मा त्वा नि क्रन्पूर्वचितो निकारिणः ।
क्षत्रमग्ने सुयममस्तु तुभ्यमुपसत्ता वर्धतां ते अनिष्टृतः ॥४॥ ४
क्षत्रेणाग्ने स्वायुः सꣳ रभस्व मित्रेणाग्ने मित्रधेये यतस्व ।
सजातानां मध्यमस्था एधि राज्ञामग्ने विहव्यो दीदिहीह ॥५॥ ५
अति निहो अति स्रिधोऽत्यचित्तिमत्यरातिमग्ने ।
विश्वा ह्यग्ने दुरिता सहस्वाथास्मभ्यꣳ सहवीरꣳ रयिं दाः ॥६॥ ६
अनाधृष्यो जातवेदा अनिष्टृतो विराळग्ने क्षत्रभृद्दीदिहीह ।
विश्वा आशाः प्रमुञ्चन्मानुषीर्भियः शिवाभिरद्य परि पाहि नो वृधे ॥७॥ ७
बृहस्पते सवितर्बोधयैनꣳ सꣳशितं चित्सन्तराꣳ सꣳ शिशाधि ।
वर्धयैनं महते सौभगाय विश्व एनमनु मदन्तु देवाः ॥८॥ ८
अमुत्रभूयादध यद्यमस्य बृहस्पते अभिशस्तेरमुञ्चः ।
प्रत्यौहतामश्विना मृत्युमस्माद्देवानामग्ने भिषजा शचीभिः ॥९॥ ९
उद्वयं तमसस्परि स्वः पश्यन्त उत्तरम् ।
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥१०॥ (१) १०

ऊर्ध्वा अस्य समिधो भवन्त्यूर्ध्वा शुक्रा शोचीꣳष्यग्नेः ।
द्युमत्तमा सुप्रतीकस्य सूनोः ॥१॥ ११
तनूनपादसुरो विश्ववेदा देवो देवेषु देवः । पथो अनक्तु मध्वा घृतेन ॥२॥ १२
मध्वा यज्ञं नक्षसे प्रीणानो नराशꣳसो अग्ने । सुकृद्देवः सविता विश्ववारः ॥३॥ १३
अच्छायमेति शवसा घृतेनैळानो वह्निर्नमसा । अग्निꣳ स्रुचो अध्वरेषु प्रयत्सु ॥४॥ १४
स यक्षदस्य महिमानमग्नेः स ईं मन्द्रा सुप्रयसः । वसुश्चेतिष्ठो वसुधातमश्च ॥५॥ १५ [१६४१]

द्वारो देवीरन्वस्य विश्वे व्रता ददन्ते अग्नेः। उरुव्यचसो धाम्ना पत्यमानाः ॥६॥ १६
ते अस्य योषणे दिव्ये न योना उषासानक्ता। इमं यज्ञमवतामध्वरं नः ॥७॥ १७
दैव्या होतारा ऊर्ध्वमध्वरं नोऽग्नेर्जिह्वामभि गृणीतम्। कृणुतं नः स्विष्टिम् ॥८॥ १८
तिस्रो देवीर्बर्हिरेद९ सदन्त्विळा सरस्वती भारती। मही गृणाना ॥९॥ १९
तन्नस्तुरीपमद्भुतं पुरुक्षु त्वष्टा सुवीरम्। रायस्पोषं वि ष्यतु नाभिमस्मे ॥१०॥ २०
वनस्पतेऽव सृजा रराणस्त्मना देवेषु। अग्निर्हव्य९ शमिता सूदयाति ॥११॥ २१
अग्ने स्वाहा कृणुहि जातवेद इन्द्राय हव्यम्।
विश्वे देवा हविरिदं जुषन्ताम् ॥१२॥ (२) २२

पीवो अन्ना रयिवृधः सुमेधाः श्वेतः सिषक्ति नियुतामभिश्रीः।
ते वायवे समनसो वि तस्थुर्विश्वेन्नरः स्वपत्यानि चक्रुः ॥१॥ २३
राये नु यं जज्ञतू रोदसीमे राये देवी धिषणा धाति देवम्।
अध वायुं नियुतः सश्चत स्वा उत श्वेतं वसुधितिं निरेके ॥२॥ २४
वायुरग्रेगा यज्ञप्रीः साकं गन्मनसा यज्ञम्।
शिवो नियुद्भिः शिवाभिः ॥३॥ २५
प्र याभिर्यासि दाश्वा९समच्छा नियुद्भिर्वाय इष्टये दुरोणे।
नि नो रयि९ सुभोजसं युवस्व नि वीरं गव्यमश्व्यं च राधः ॥४॥ २६
वायो ये ते सहस्रिणो रथासस्तेभिरा गहि। नियुत्वान्त्सोमपीतये ॥५॥ २७
एकया च दशभिश्च स्वभूते द्वाभ्यामिष्टये विं९शती च।
तिसृभिश्च वहसे त्रि९शता च नियुद्भिर्वाय इह ता वि मुञ्च ॥६॥ २८
नियुत्वान्वाय आ गह्यय९ शुक्रो अयामि ते। गन्तासि सुन्वतो गृहम् ॥७॥ २९
वायो शुक्रो अयामि ते मध्वो अग्रं दिविष्टिषु।
आ याहि सोमपीतये स्पार्हो देव नियुत्वता ॥८॥ ३०
आ नो नियुद्भिः शतिनीभिरध्वर९ सहस्रिणीभिरुप याहि यज्ञम्।
वायो अस्मिन्त्सवने मादयस्व यूयं पात स्वस्तिभिः सदा नः ॥९॥ ३१
तव वाय ऋतस्पते त्वष्टुर्जामातरद्भुत। अवा९स्या वृणीमहे ॥१०॥ (३) ३२

हिरण्यगर्भ इत्येषः। येन द्यौरुग्रा पृथिवी च दृळ्हा येन स्वः स्तभितं येन नाकः।
यो अन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम ॥१॥ ३३ [१६६४]

यं क्रन्दसी अवसा तस्तभाने अभ्यैक्षेतां मनसा रेजमाने ।
यत्राधि सूर उदितो विभाति कस्मै देवाय हविषा विधेम ॥२॥ ३४
आपो ह यद्बृहतीर्विश्वमायन्गर्भं दधाना जनयन्तीरग्निम् ।
ततो देवाना९ समवर्ततासुरेकः कस्मै देवाय हविषा विधेम ॥३॥ ३५
यश्चिदापो महिना पर्यपश्यद्दक्षं दधाना जनयन्तीर्यज्ञम् ।
यो देवेष्वधि देव एक आसीत्कस्मै देवाय हविषा विधेम ।
मा नो हि९सीज्जनिता यः पृथिव्या यो वा दिव९ सत्यधर्मा जजान ।
यश्चापश्चन्द्रा बृहतीर्जजान कस्मै देवाय हविषा विधेम ।
प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव ।
यत्कामास्ते जुहुमस्तन्नो अस्तु वय९ स्याम पतयो रयीणाम् ॥४॥ (४) ३६

अग्न आयू९षि पवस आ सुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनाम् ॥१॥ ३७
अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम् । दधद्रयिं मयि पोषम् ॥२॥ ३८
अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः । तमीमहे महागयम् ॥३॥ ३९
अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः ।
ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥४॥ ४०
न त्वावाँ२ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते ।
अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे ॥५॥ ४१
त्वामिद्धि हवामहे सातौ वाजस्य कारवः ।
त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः ॥६॥ ४२
स त्वं नश्चित्र वज्रहस्त धृष्णुया महः स्तवानो अद्रिवः ।
गामश्व९ रथ्यमिन्द्र सं किर सत्रा वाजं न जिग्युषे ॥७॥ ४३
कया नश्चित्र आ भुवदूती सदावृधः सखा । कया शचिष्ठया वृता ॥८॥ ४४
कस्त्वा सत्यो मदानां म९हिष्ठो मत्सदन्धसः । दृळ्हा चिदारुजे वसु ॥९॥ ४५
अभी षु णः सखीनामविता जरितॄणाम् । शतं भवास्यूतये ॥१०॥ ४६
यज्ञायज्ञा वो अग्नये गिरागिरा च दक्षसे ।
प्रप्र वयममृतं जातवेदसं प्रियं मित्रं न श९सिषम् ॥११॥ ४७
ऊर्जो नपात९ स हिनायमस्मयुर्दाशेम हव्यदातये ।
भुवद्वाजेष्ववि॑ता भुवद्वृध उत त्राता तनूनाम् ॥१२॥ (५) ४८ [१६७१]

संवत्सरोऽसि परिवत्सरोऽसीदावत्सरोऽसीद्वत्सरोऽसि वत्सरोऽसि ।
उपसस्ते कल्पन्तामहोरात्रास्ते कल्पन्तामर्धमासास्ते कल्पन्तां मासास्ते कल्पन्तामृतवस्ते
कल्पन्ताᳪ संवत्सरस्ते कल्पताम् ॥१॥ ४९
प्रेत्या एत्यै सं चाञ्च प्र च सारय ।
सुपर्णचिदसि तया देवतयाङ्गिरस्वद् ध्रुवः सीद ॥२॥ (६) ५० [१६८१]

समास्त्वा दश ॥ १० ॥ ऊर्ध्वा द्वादश ॥ १२ ॥ पीवो अन्नान्दश ॥ १० ॥ हिरण्यगर्भश्चतस्रः ॥ ४ ॥
अग्न आयूᳪषि द्वादश ॥ १२ ॥ संवत्सरो द्वे ॥ २ ॥ षडनुवाकेषु पञ्चाशत् ॥ ५० ॥

॥ इति शुक्लयजुःकाण्वसंहितायां एकोनत्रिंशोऽध्यायः ॥२९॥

## अथ त्रिंशोऽध्यायः ।

होता यक्षत्समिधेन्द्रमिळस्पदे नाभा पृथिव्या अधि ।
दिवो वर्ष्मन्त्समिध्यत ओजिष्ठश्चर्षणीसहां वेत्वाज्यस्य होतर्यज ॥१॥ १
होता यक्षत्तनूनपातमूतिभिर्जेतारमपराजितम् ।
इन्द्रं देवᳪ स्वर्विदं पथिभिर्मधुमत्तमैर्नराशᳪसेन तेजसा वेत्वाज्यस्य होतर्यज ॥२॥ २
होता यक्षदिळाभिरिन्द्रमीळितमाजुह्वानममर्त्यम् ।
देवो देवैः सवीर्यो वज्रहस्तः पुरंदरो वेत्वाज्यस्य होतर्यज ॥३॥ ३
होता यक्षद्बर्हिषीन्द्रं निषद्वरं वृषभं नर्यापसम् ।
वसुभी रुद्रैरादित्यैः सयुग्भिर्बर्हिरासदद्वेत्वाज्यस्य होतर्यज ॥४॥ ४
होता यक्षदोजो न वीर्यᳪ सहो द्वार इन्द्रमवर्धयन् ।
सुप्रायणा अस्मिन्यज्ञे वि श्रयन्तामृतावृधो द्वार इन्द्राय मीढुषे व्यन्त्वाज्यस्य होतर्यज॥५॥५
होता यक्षदुषे इन्द्रस्य धेनू सुदुघे मातरा मही ।
सवातरौ न तेजसा वत्समिन्द्रमवर्धतां वीतामाज्यस्य होतर्यज ॥६॥ ६
होता यक्षद्दैव्या होतारा भिषजा सखाया हविषेन्द्रं भिषज्यतः ।
कवी देवौ प्रचेतसा इन्द्राय धत्त इन्द्रियं वीतामाज्यस्य होतर्यज ॥७॥ ७
होता यक्षत्तिस्रो देवीर्न भेषजं त्रयस्त्रिधातवोऽपस इळा सरस्वती भारती महीः ।
इन्द्र पत्नीर्हविष्मतीर्व्यन्त्वाज्यस्य होतर्यज ॥८॥ ८
होता यक्षत्त्वष्टारमिन्द्रं देवं भिषजᳪ सुयजं घृतश्रियम् ।
पुरुरूपᳪ सुरेतसं मघोनमिन्द्राय त्वष्टा दधदिन्द्रियाणि वेत्वाज्यस्य होतर्यज ॥९॥ ९[१६९०]

होता यक्षद्वनस्पतिꣳ शमितारꣳ शतक्रतुं धियो जोष्टारमिन्द्रियम् ।
मध्वा समञ्जन्पथिभिः सुगेभिः स्वदाति यज्ञं मधुना घृतेन वेत्वाज्यस्य होतर्यज ॥१०॥ १०
होता यक्षदिन्द्रꣳ स्वाहाज्यस्य स्वाहा मेदसः स्वाहा स्तोकानाꣳ स्वाहा स्वाहाकृतीनाꣳ स्वाहा
हव्यसूक्तीनाम् । स्वाहा देवा आज्यपा जुषाणा इन्द्र आज्यस्य व्यन्तु होतर्यज ॥११॥ (१) ११

देवं बर्हिरिन्द्रꣳ सुदेवं देवैर्वीरवत्स्तीर्णं वेद्यामवर्धयत् ।
वस्तोर्वृतं प्राक्तोर्भृतꣳ राया बर्हिष्मतोऽत्यगाद्वसुवने वसुधेयस्य वेतु यज ॥१॥ १२
देवीर्द्वार इन्द्रꣳ संघाते वीड्वीर्यामन्नवर्धयन् । आ वत्सेन तरुणेन कुमारेण च मीवतापार्वाणꣳ
रेणुककाटं नुदन्तां वसुवने वसुधेयस्य व्यन्तु यज ॥२॥ १३
देवी उषासानक्तेन्द्रं यज्ञे प्रयत्यह्वेताम् ।
दैवीर्विशः प्रायासिष्टाꣳ सुप्रीते सुधिते वसुवने वसुधेयस्य वीतां यज ॥३॥ १४
देवी जोष्ट्री वसुधिती देवमिन्द्रमवर्धताम् । अयाव्यन्याघा द्वेषाꣳस्यान्या वक्षद्वसु
वार्याणि यजमानाय शिक्षिते वसुवने वसुधेयस्य वीतां यज ॥४॥ १५
देवी ऊर्जाहुती दुघे सुदुघे पयसेन्द्रमवर्धताम् ।
इषमूर्जमन्या वक्षत्सग्धिꣳ सपीतिमन्या नवेन पूर्वं दयमाने पुराणेन नवमधातामूर्जमूर्जाहुती
ऊर्जयमाने वसु वार्याणि यजमानाय शिक्षिते वसुवने वसुधेयस्य वीतां यज ॥५॥ १६
देवा दैव्या होतारा देवमिन्द्रमवर्धताम् ।
हताघशꣳसा आभार्ष्टां वसु वार्याणि यजमानाय शिक्षितौ वसुवने वसुधेयस्य वीतां यज ॥६॥ १७
देवीस्तिस्रस्तिस्रो देवीः पतिमिन्द्रमवर्धयन् ।
अस्पृक्षद्भारती दिवꣳ रुद्रैर्यज्ञꣳ सरस्वतीळा वसुमती
गृहान्वसुवने वसुधेयस्य व्यन्तु यज ॥७॥ १८
देव इन्द्रो नराशꣳसस्त्रिवरूथस्त्रिबन्धुरो देवमिन्द्रमवर्धयत् ।
शतेन शितिपृष्ठानामाहितः सहस्रेण प्र वर्तते मित्रावरुणेदस्य होत्रमर्हतो
बृहस्पतिं स्तोत्रमश्विनाध्वर्यवं वसुवने वसुधेयस्य वेतु यज ॥८॥ १९
देवो देवैर्वनस्पतिर्हिरण्यपर्णो मधुशाखः सुपिप्पलो देवमिन्द्रमवर्धयत् ।
दिवमग्रेणास्पृक्षदान्तरिक्षं पृथिवीमदृꣳहीद्वसुवने वसुधेयस्य वेतु यज ॥९॥ २०
देवं बर्हिर्वारितीनां देवमिन्द्रमवर्धयत् ।
स्वासस्थमिन्द्रेणासन्नमन्या बर्हीꣳष्यभ्यभूद्वसुवने वसुधेयस्य वेतु यज ॥१०॥ २१ [१७०२]

देवो अग्निः स्विष्टकृद्देवमिन्द्रमवर्धयत् ।
स्विष्टं कुर्वन् त्स्विष्टकृत्स्विष्टमद्य करोतु नो वसुवने वसुधेयस्य वेतु यज ॥११॥ २२
अग्निमद्य होतारमवृणीतायं यजमानः पचन्पक्तीः पचन्पुरोळाशं बध्नन्निन्द्राय च्छागम् ।
सूपस्था अद्य देवो वनस्पतिरभवदिन्द्राय च्छागेन ।
अघत्तं मेदस्तः प्रति पचताग्रभीदवीवृधत्पुरोळाशेन । त्वामद्य ऋषे ॥१२॥ (२) २३

होता यक्षत्समिधानं महद्यशः सुसमिद्धं वरेण्यमग्निमिन्द्रं वयोधसम् ।
गायत्रीं छन्द इन्द्रियं त्र्यविं गां वयो दधद्वेत्वाज्यस्य होतर्यज ॥१॥ २४
होता यक्षत्तनूनपातमुद्भिदं यं गर्भमदितिर्दधे शुचिमिन्द्रं वयोधसम् ।
उष्णिहं छन्द इन्द्रियं दित्यवाहं गां वयो दधद्वेत्वाज्यस्य होतर्यज ॥२॥ २५
होता यक्षदीळेन्यमीळितं वृत्रहन्तममिळाभिरीड्यꣳ सहः सोममिन्द्रं वयोधसम् ।
अनुष्टुभं छन्द इन्द्रियं पञ्चाविं गां वयो दधद्वेत्वाज्यस्य होतर्यज ॥३॥ २६
होता यक्षत्सुबर्हिषं पूषण्वन्तममर्त्यꣳ सीदन्तं बर्हिषि प्रियेऽमृतेन्द्रं वयोधसम् ।
बृहतीं छन्द इन्द्रियं त्रिवत्सं गां वयो दधद्वेत्वाज्यस्य होतर्यज ॥४॥ २७
होता यक्षद्व्यचस्वतीः सुप्रायणा ऋतावृधो द्वारो देवीर्हिरण्ययीर्ब्रह्माणमिन्द्रं वयोधसम् ।
पङ्क्तिं छन्द इहेन्द्रियं तुर्यवाहं गां वयो दधद्व्यन्त्वाज्यस्य होतर्यज ॥५॥ २८
होता यक्षत्सुपेशसा सुशिल्पे बृहती उभे नक्तोषासा न दर्शते विश्वमिन्द्रं वयोधसम् ।
त्रिष्टुभं छन्द इहेन्द्रियं पष्ठवाहं गां वयो दधद्वीतामाज्यस्य होतर्यज ॥६॥ २९
होता यक्षत्प्रचेतसा देवानामुत्तमं यशो होतारा दैव्या कवी सयुजेन्द्रं वयोधसम् ।
जगतीं छन्द इन्द्रियमनड्वाहं गां वयो दधद्वीतामाज्यस्य होतर्यज ॥७॥ ३०
होता यक्षत्पेशस्वतीस्तिस्रो देवीर्हिरण्ययीर्भारतीर्बृहतीर्महीः पतिमिन्द्रं वयोधसम् ।
विराजं छन्द इहेन्द्रियं धेनुं गां न वयो दधद्व्यन्त्वाज्यस्य होतर्यज ॥८॥ ३१
होता यक्षत्सुरेतसं त्वष्टारं पुष्टिवर्धनꣳ रूपाणि बिभ्रतं पृथक् पुष्टिमिन्द्रं वयोधसम् ।
द्विपदं छन्द इन्द्रियमुक्षाणं गां न वयो दधद्वेत्वाज्यस्य होतर्यज ॥९॥ ३२
होता यक्षद्वनस्पतिꣳ शमितारꣳ शतक्रतुꣳ
हिरण्यपर्णमुक्थिनꣳ रशनां बिभ्रतं वशिं भगमिन्द्रं वयोधसम् ।
ककुभं छन्द इहेन्द्रियं वशां वेहतं गां वयो दधद्वेत्वाज्यस्य होतर्यज ॥१०॥ ३३
होता यक्षत्स्वाहाकृतीरग्निं गृहपतिं पृथग्वरुणं भेषजं कविं क्षत्रमिन्द्रं वयोधसम् ।
अतिच्छन्दसं छन्द इन्द्रियं बृहदृषभं गां वयो दधद्व्यन्त्वाज्यस्य होतर्यज ११(२)३४ [१७१५]

देवं बर्हिर्वयोधसं देवमिन्द्रमवर्धयत् ।
गायत्र्या छन्दसेन्द्रियं चक्षुरिन्द्रे वयो दधद्वसुवने वसुधेयस्य वेतु यज ॥१॥ ३५
देवीर्द्वारो वयोधसं शुचिमिन्द्रमवर्धयन् ।
उष्णिहा छन्दसेन्द्रियं प्राणमिन्द्रे वयो दधद्वसुवने वसुधेयस्य व्यन्तु यज ॥२॥ ३६
देवी उषासानक्ता देवमिन्द्रं वयोधसं देवी देवमवर्धताम् ।
अनुष्टुभा छन्दसेन्द्रियं बलमिन्द्रे वयो दधद्वसुवने वसुधेयस्य वीतां यज ॥३॥ ३७
देवी जोष्ट्री वसुधिती देवमिन्द्रं वयोधसं देवी देवमवर्धताम् ।
बृहत्या छन्दसेन्द्रियं श्रोत्रमिन्द्रे वयो दधद्वसुवने वसुधेयस्य वीतां यज ॥४॥ ३८
देवी ऊर्जाहुती दुघे सुदुघे पयसेन्द्रं वयोधसं देवी देवमवर्धताम् ।
पङ्क्त्या छन्दसेन्द्रियं शुक्रमिन्द्रे वयो दधद्वसुवने वसुधेयस्य वीतां यज ॥५॥ ३९
देवा दैव्या होतारा देवमिन्द्रं वयोधसं देवौ देवमवर्धताम् ।
त्रिष्टुभा छन्दसेन्द्रियं त्विषिमिन्द्रे वयो दधद्वसुवने वसुधेयस्य वीतां यज ॥६॥ ४०
देवीस्तिस्रस्तिस्रो देवीर्वयोधसं पतिमिन्द्रमवर्धयन् ।
जगत्या छन्दसेन्द्रियं शूषमिन्द्रे वयो दधद्वसुवने वसुधेयस्य व्यन्तु यज ॥७॥ ४१
देवो नराशंसो देवमिन्द्रं वयोधसं देवो देवमवर्धयत् ।
विराजा छन्दसेन्द्रियं रूपमिन्द्रे वयो दधद्वसुवने वसुधेयस्य वेतु यज ॥८॥ ४२
देवो वनस्पतिर्देवमिन्द्रं वयोधसं देवो देवमवर्धयत् ।
द्विपदा छन्दसेन्द्रियं भगमिन्द्रे वयो दधद्वसुवने वसुधेयस्य वेतु यज ॥९॥ ४३
देवं बर्हिर्वारितीनां देवमिन्द्रं वयोधसं देवं देवमवर्धयत् ।
ककुभा छन्दसेन्द्रियं यश इन्द्रे वयो दधद्वसुवने वसुधेयस्य वेतु यज ॥१०॥ ४४
देवो अग्निः स्विष्टकृद्देवमिन्द्रं वयोधसं देवो देवमवर्धयत् ।
अतिच्छन्दसा छन्दसेन्द्रियं क्षत्रमिन्द्रे वयो दधद्वसुवने वसुधेयस्य वेतु यज ॥११॥ ४५
अग्निमद्य होतारमवृणीतायं यजमानः पचन्पक्तीः पचन्पुरोळाशं बध्नन्निन्द्राय वयोधसे छागम् ।
सूपस्था अद्य देवो वनस्पतिरभवदिन्द्राय वयोधसे छागेन ।
अघत्तं मेदस्तः प्रतिपचताग्रभीदवीवृधत्पुरोळाशेन । त्वामद्य ऋषे ॥१२॥ (४) ४६ [१७३७]

होता यक्षदेकादश ॥११॥ देवं बर्हिर्द्वादश ॥१२॥ होता यक्षदेकादश ॥११॥ देवं बर्हिर्द्वादश ॥१२॥

॥ चतुरनुवाकेषु षट्चत्वारिंशत् ॥४६॥

॥ इति शुक्लयजुःकाण्वसंहितायां त्रिंशत्तमोऽध्यायः ॥३०॥

॥ इति तृतीयो दशकः ॥

अथ चतुर्थो दशकः ॥

## अथैकत्रिंशोऽध्यायः ।

समिद्धो अञ्जन्कृदरं मतीनां घृतमग्ने मधुमत्पिन्वमानः ।
वाजी वहन्वाजिनं जातवेदो देवानां वक्षि प्रियमा सधस्थम् ॥१॥ १
घृतेनाञ्जन्त्सं पथो देवयानान्प्रजानन्वाज्यप्येतु देवान् ।
अनु त्वा सप्ते प्रदिशः सचन्ताᳬ स्वधामस्मै यजमानाय धेहि ॥२॥ ३
ईड्यश्चासि वन्द्यश्च वाजिन्नाशुश्चासि मेध्यश्च सप्ते ।
अग्निष्ट्वा देवैर्वसुभिः सजोषाः प्रीतं वह्निं वहतु जातवेदाः ॥३॥ ३
स्तीर्णं बर्हिः सुष्टरीमा जुषाणोरु पृथु प्रथमानं पृथिव्याम् ।
देवेभिर्युक्तमदितिः सजोषाः स्योनं कृण्वाना सुविते दधातु ॥४॥ ४
एता उ वः सुभगा विश्वरूपा वि पक्षोभिः श्रयमाणा उदातैः ।
ऋष्वाः सतीः कवषः शुम्भमाना द्वारो देवीः सुप्रायणा भवन्तु ॥५॥ ५
अन्तरा मित्रावरुणा चरन्ती मुखं यज्ञानामभि संविदाने ।
उषासा वाᳬ सुहिरण्ये सुशिल्पे ऋतस्य योना इह सादयामि ॥६॥ ६
प्रथमा वाᳬ सरथिना सुवर्णा देवौ पश्यन्तौ भुवनानि विश्वा ।
अपिप्रयं चोदना वां मिमाना होतारा ज्योतिः प्रदिशा दिशन्ता ॥७॥ ७
आदित्यैर्नो भारती वष्टु यज्ञᳬ सरस्वती सह रुद्रैर्न आवीत् ।
इळोपहूता वसुभिः सजोषा यज्ञं नो देवीरमृतेषु धत्त ॥८॥ ८
त्वष्टा वीरं देवकामं जजान त्वष्टुरर्वा जायत आशुरश्वः ।
त्वष्टेदं विश्वं भुवनं जजान बहोः कर्तारमिह यक्षि होतः ॥९॥ ९
अश्वो घृतेन त्मन्या समक्त उप देवाँ२ ऋतुशः पाथ एतु ।
वनस्पतिर्देवलोकं प्रजानन्नग्निना हव्या स्वदितानि वक्षत् ॥१०॥ १०
प्रजापतेस्तपसा वावृधानः सद्यो जातो दधिषे यज्ञमग्ने ।
स्वाहाकृतेन हविषा पुरोगा याहि साध्या हविरदन्तु देवाः ॥११॥ (१) ११

केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे । समुषद्भिरजायथाः ॥१॥ १२
जीमूतस्येव भवति प्रतीकं यद्वर्मी याति समदामुपस्थे ।
अनाविद्धया तन्वा जय त्वᳬ स त्वा वर्मणो महिमा पिपर्तु ॥२॥ १३ [१७४०]

धन्वना गा धन्वनाजिं जयेम धन्वना तीव्राः समदो जयेम ।
धनुः शत्रोरपकामं कृणोति धन्वना सर्वाः प्रदिशो जयेम ॥३॥ १४
ते आचरन्ती समनेव योषा मातेव पुत्रं बिभृतामुपस्थे ।
अप शत्रून्विध्यताᳩ संविदाने आर्त्नी इमे विष्फुरन्ती अमित्रान् ॥४॥ १५
वक्ष्यन्तीवेदा गनीगन्ति कर्णं प्रियᳩ सखायं परिषस्वजाना ।
योषेव शिङ्क्ते वितताधि धन्वन् ज्या इयᳩ समने पारयन्ती ॥५॥ १६
अहिरिव भोगैः पर्येति बाहुं ज्याया हेतिं परिबाधमानः ।
हस्तघ्नो विश्वा वयुनानि विद्वान्पुमान्पुमाᳩसं परि पातु विश्वतः ॥६॥ १७
बह्वीनां पिता बहुरस्य पुत्रश्चिश्चा कृणोति समनावगत्य ।
इषुधिः सङ्काः पृतनाश्च सर्वाः पृष्ठे निनद्धो जयति प्रसूतः ॥७॥ १८
सुपर्णं वस्ते मृगो अस्या दन्तो गोभिः संनद्धा पतति प्रसूता ।
यत्रा नरः सं च वि च द्रवन्ति तत्रास्मभ्यमिषवः शर्म यᳩसन् ॥८॥ १९
वनस्पते वीड्वङ्गो हि भूया अस्मत्सखा प्रतरणः सुवीरः ।
गोभिः संनद्धो असि वीळयस्वास्थाता ते जयतु जेत्वानि ॥९॥ २०
रथे तिष्ठन्नयति वाजिनः पुरो यत्रयत्र कामयते सुषारथिः ।
अभीशूनां महिमानं पनायत मनः पश्चादनु यच्छन्ति रश्मयः ॥१०॥ २१
आ जङ्घन्ति सान्वेषां जघनाँ२ उप जिघ्नते ।
अश्वाजनि प्रचेतसोऽश्वान्त्समत्सु चोदय ॥११॥ २२
उप श्वासय पृथिवीमुत द्यां पुरुत्रा ते मनुतां विष्ठितं जगत् ।
स दुन्दुभे सजूरिन्द्रेण देवैर्दूराद्दवीयो अप सेध शत्रून् ॥१२॥ (२) २३

यदक्रन्दः प्रथमं जायमान उद्यन्त्समुद्रादुत वा पुरीषात् ।
श्येनस्य पक्षा हरिणस्य बाहू उपस्तुत्यं महि जातं ते अर्वन् ॥१॥ २४
यमेन दत्तं त्रित एनमायुनगिन्द्र एणं प्रथमो अध्यतिष्ठत् ।
गन्धर्वो अस्य रशनामगृभ्णात्सूरादश्वं वसवो निरतष्ट ॥२॥ २५
असि यमो अस्यादित्यो अर्वन्नसि त्रितो गुह्येन व्रतेन ।
असि सोमेन समया विपृक्त आहुस्ते त्रीणि दिवि बन्धनानि ॥३॥ २६
त्रीणि त आहुर्दिवि बन्धनानि त्रीण्यप्सु त्रीण्यन्तः समुद्रे ।
उतेव मे वरुणश्छन्त्स्यर्वन्यत्रा त आहुः परमं जनित्रम् ॥४॥ २७ [१५४]

इमा ते वाजिन्नवमार्जनानीमा शफानां सनितुर्निधाना ।
अत्रा ते भद्रा रशना अपश्यमृतस्य या अभिरक्षन्ति गोपाः ॥५॥ २८
आत्मानं ते मनसारादजानामवो दिवा पतयन्तं पतङ्गम् ।
शिरो अपश्यं पथिभिः सुगेभिररेणुभिर्जेहमानं पतत्रि ॥६॥ २९
अत्रा ते रूपमुत्तममपश्यं जिगीषमाणमिष आ पदे गोः ।
यदा ते मर्तो अनु भोगमानळादिद् ग्रसिष्ठ ओषधीरजीगः ॥७॥ ३०
अनु त्वा रथो अनु मर्यो अर्वन्ननु गावोऽनु भगः कनीनाम् ।
अनु व्रातासस्तव सख्यमीयुरनु देवा ममिरे वीर्यं ते ॥८॥ ३१
हिरण्यशृङ्गोऽयो अस्य पादा मनोजवा अवर इन्द्र आसीत् ।
देवा इदस्य हविरद्यमायन्यो अर्वन्तं प्रथमो अध्यतिष्ठत् ॥९॥ ३२
ईर्मान्तासः सिलिकमध्यमासः सꣳ शूरणासो दिव्यासो अत्याः ।
हꣳसा इव श्रेणिशो यतन्ते यदाक्षिषुर्दिव्यमज्ममश्वाः ॥१०॥ ३३
तव शरीरं पतयिष्ण्वर्वन्तव चित्तं वात इव ध्रजीमान् ।
तव शृङ्गाणि विष्ठिता पुरुत्रारण्येषु जर्भुराणा चरन्ति ॥११॥ ३४
उप प्रागाच्छसनं वाज्यर्वा देवद्रीचा मनसा दीध्यानः ।
अजः पुरो नीयते नाभिरस्यानु पश्चात्कवयो यन्ति रेभाः ॥१२॥ ३५
उप प्रागात्परमं यत्सधस्थमर्वाँ २ अच्छा पितरं मातरं च ।
अद्या देवाञ्जुष्टतमो हि गम्या अथा शास्ते दाशुषे वार्याणि ॥१३॥ (३) ३६

समिद्धो अद्य मनुषो दुरोणे देवो देवान्यजसि जातवेदः ।
आ च वह मित्रमहश्चिकित्वान्त्वं दूतः कविरसि प्रचेताः ॥१॥ ३७
तनूनपात्पथ ऋतस्य यानान्मध्वा समञ्जन्त्स्वदया सुजिह्व ।
मन्मानि धीभिरुत यज्ञमृन्धन्देवत्रा च कृणुह्यध्वरं नः ॥२॥ ३८
नराशꣳसस्य महिमानमेषामुप स्तोषाम यजतस्य यज्ञैः ।
ये सुक्रतवः शुचयो धियंधाः स्वदन्ति देवा उभयानि हव्या ॥३॥ ३९
आजुह्वान ईड्यो वन्द्यश्चा याह्यग्ने वसुभिः सजोषाः ।
त्वं देवानामसि यह्व होता स एनान्यक्षीषितो यजीयान् ॥४॥ ४०
प्राचीनं बर्हिः प्रदिशा पृथिव्या वस्तोरस्या वृज्यते अग्रे अह्नाम् ।
व्यु प्रथते वितरं वरीयो देवेभ्यो अदितये स्योनम् ॥५॥ ४१ [१७६८]

व्यचस्वतीरुर्विया वि श्रयन्तां पतिभ्यो न जनयः शुम्भमानाः ।
देवीर्द्वारो बृहतीर्विश्वमिन्वा देवेभ्यो भवत सुप्रायणाः ॥६॥ ४२
आ सुष्वयन्ती यजते उपाके उषासानक्ता सदतां नि योनौ ।
दिव्ये योषणे बृहती सुरुक्मे अधि श्रियꣳ शुक्रपिशं दधाने ॥७॥ ४३
दैव्या होतारा प्रथमा सुवाचा मिमाना यज्ञं मनुषो यजध्यै ।
प्रचोदयन्ता विदथेषु कारू प्राचीनं ज्योतिः प्रदिशा दिशन्ता ॥८॥ ४४
आ नो यज्ञं भारती तूयमेत्विळा मनुष्वदिह चेतयन्ती ।
तिस्रो देवीर्बर्हिरेदꣳ स्योनꣳ सरस्वती स्वपसः सदन्तु ॥९॥ ४५
य इमे द्यावापृथिवी जनित्री रूपैरपिꣳशद्भुवनानि विश्वा ।
तमद्य होतरिषितो यजीयान्देवं त्वष्टारमिह यक्षि विद्वान् ॥१०॥ ४६
उपावसृज त्मन्या समञ्जन्देवानां पाथ ऋतुथा हवीꣳषि ।
वनस्पतिः शमिता देवो अग्निः स्वदन्तु हव्यं मधुना घृतेन ॥११॥ ४७
सद्यो जातो व्यमिमीत यज्ञमग्निर्देवानामभवत्पुरोगाः ।
अस्य होतुः प्रदिश्यृतस्य वाचि स्वाहाकृतꣳ हविरदन्तु देवाः ॥१२॥ (४) ४८

अग्नये गायत्राय त्रिवृते राथन्तरायाष्टाकपाल इन्द्राय त्रैष्टुभाय पञ्चदशाय बार्हतायैकादशकपालो
विश्वेभ्यो देवेभ्यो जागतेभ्यः सप्तदशेभ्यो वैरूपेभ्यो द्वादशकपालो मित्रावरुणाभ्यामानुष्टुभा-
भ्यामेकविꣳशाभ्यां वैराजाभ्याम् । पयस्या बृहस्पतये पाङ्क्ताय त्रिणवाय शाक्वराय चरुः सवित्र
औष्णिहाय त्रयस्त्रिꣳशाय रैवताय द्वादशकपालः प्राजापत्यश्चरुरदित्यै विष्णुपत्न्यै चरुरग्नये
वैश्वानराय द्वादशकपालोऽनुमत्या अष्टाकपालः ॥१॥ (५) ४९

आग्नेयः कृष्णग्रीवः सारस्वती मेषी बभ्रुः सौम्यः पौष्णः श्यामः शितिपृष्ठो बार्हस्पत्यः शिल्पो
वैश्वदेवः । ऐन्द्रोऽरुणो मारुतः कल्माष ऐन्द्राग्नः सꣳहितोऽधोरामः सावित्रो वारुणः कृष्ण
एकशितिपात्पेत्वः ॥१॥ (६) ५०

अग्नयेऽनीकवते रोहिताञ्जिरनड्वानधोरामौ सावित्रौ पौष्णौ रजतनाभी वैश्वदेवौ पिशङ्गौ तूपरौ ।
मारुतः कल्माष आग्नेयः कृष्णोऽजः सारस्वती मेषी वारुणः पेत्वः ॥१॥ (७) ५१ [१७७४]

समिद्धो अञ्जन्नेकादश ॥११॥ केतुं कृण्वन्द्वादश ॥१२॥ यदक्रन्दस्त्रयोदश ॥१३॥ समिद्धो अद्य द्वादश ॥१२॥
अग्नये गायत्रायैका ॥१॥ आग्नेयः कृष्णग्रीव एका ॥ १ ॥ अग्नयेऽनीकवत इत्येका ॥ १ ॥
॥ सप्तानुवाकेष्वेकपञ्चाशत् ॥ ५१ ॥
॥ इति शुक्लयजुःकाण्वसंहितायामेकत्रिंशत्तमोऽध्यायः ॥३१॥

# अथ द्वात्रिंशोऽध्यायः।

अस्याजरासो दुमामरित्रा अर्चद्धूमासो अग्नयः पावकाः।
श्वितीचयः श्वात्रासो भुरण्यवो वनर्षदो वायवो न सोमाः ॥१॥ १
हरयो धूमकेतवो वातजूता उप द्यवि। यतन्ते वृथगग्नयः ॥२॥ २
यजा नो मित्रावरुणा यजा देवाँ२ ऋतं बृहत्। अग्ने यक्षि स्वं दमम् ॥३॥ ३
युक्ष्वा हि देवहूतमाँ२ अश्वाँ२ अग्ने रथीरिव। नि होता पूर्व्यः सदः ॥४॥ ४
द्वे विरूपे चरतः स्वर्थे अन्यान्या वत्समुप धापयेते।
हरिरन्यस्यां भवति स्वधावाञ्छुक्रो अन्यस्यां ददृशे सुवर्चाः ॥५॥ ५
अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठो अध्वरेष्वीड्यः।
यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशेविशे ॥६॥ ६
त्रीणि शता त्री सहस्राण्यग्निं त्रिꣳशच्च देवा नव चासपर्यन्।
औक्षन्घृतैरस्तृणन् बर्हिरस्मा आदिद्धोतारं न्यसादयन्त ॥७॥ ७
मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम्।
कविꣳ सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः ॥८॥ ८
अग्निर्वृत्राणि जङ्घनद् द्रविणस्युर्विपन्यया। समिद्धः शुक्र आहुतः ॥९॥ ९
विश्वेभिः सोम्यं मध्वग्न इन्द्रेण वायुना। पिबा मित्रस्य धामभिः ॥१०॥ १०
आ यदिषे नृपतिं तेज आनट् शुचिरेतो निषिक्तं द्यौरभीके।
अग्निः शर्धमनवद्यं युवानꣳ स्वाध्यं जनयत्सूदयच्च ॥११॥ ११
अग्ने शर्ध महते सौभगाय तव द्युम्नान्युत्तमानि सन्तु।
संजास्पत्यꣳ सुयममा कृणुष्व शत्रूयतामभि तिष्ठा महांꣳसि ॥१२॥ १२
त्वाꣳ हि मन्द्रतममर्कशोकैर्ववृमहे महि नः श्रोष्यग्ने।
इन्द्रं न त्वा शवसा देवता वायुं पृणन्ति राधसा नृतमाः ॥१३॥ १३
त्वे अग्ने स्वाहुत प्रियासः सन्तु सूरयः।
यन्तारो ये मघवानो जनानामूर्वान्दयन्त गोनाम् ॥१४॥ १४
श्रुधि श्रुत्कर्ण वह्निभिर्देवैरग्ने सयावभिः।
आसीदन्तु बर्हिषि मित्रो अर्यमा प्रातर्यावाणो अध्वरम् ॥१५॥ १५
विश्वेषामदितिर्यज्ञियानां विश्वेषामतिथिर्मानुषाणाम्।
अग्निर्देवानामव आवृणानः सुमृडीको भवतु जातवेदाः ॥१६॥ १६ [१७९४]

महो अग्नेः समिधानस्य शर्मण्यनागा मित्रे वरुणे स्वस्तये ।
श्रेष्ठे स्याम सवितुः सवीमनि तद्देवानामवो अद्या वृणीमहे ॥१७॥ (१) १७

आपश्चित्पिप्यु स्तर्यो न गावो नक्षन्नृतं जरितारस्त इन्द्र ।
याहि वायुर्न नियुतो नो अच्छा त्वꣳ हि धीभिर्दयसे वि वाजान् ॥१॥ १८
गाव उपावतावतं मही यज्ञस्य रप्सुदा । उभा कर्णा हिरण्यया ॥२॥ १९
यदद्य सूर उदितेऽनागा मित्रो अर्यमा । सुवाति सविता भगः ॥३॥ २०
आ सुते सिञ्चत श्रियꣳ रोदस्योरभिश्रियम् ।
रसा दधीत वृषभम् । तं प्रत्नथायं वेनश्चोदयत् ॥४॥ २१
आतिष्ठन्तं परि विश्वे अभूषञ्छ्रियो वसानश्चरति स्वरोचिः ।
महत्तद्वृष्णो असुरस्य नामा विश्वरूपो अमृतानि तस्थौ ॥५॥ २२
प्र वो महे मन्दमानायान्धसोऽर्चा विश्वानराय विश्वाभुवे ।
इन्द्रस्य यस्य सुमखꣳ सहो महि श्रवो नृम्णं च रोदसी सपर्यतः ॥६॥ २३
बृहन्निदिध्म एषां भूरि शस्तं पृथुः स्वरुः । येषामिन्द्रो युवा सखा ॥७॥ २४
इन्द्रेहि मत्स्यन्धसो विश्वेभिः सोमपर्वभिः । महाँ२ अभिष्टिरोजसा ॥८॥ २५
इन्द्रो वृत्रमवृणोच्छर्धनीतिः प्र मायिनाममिनाद्वर्पणीतिः ।
अहन्व्यꣳसमुशधग्वनेष्वाविर्धेना अकृणोद्राम्याणाम् ॥९॥ २६
कुतस्त्वमिन्द्र माहिनः सन्नेको यासि सत्पते किं त इत्था ।
सं पृच्छसे समराणः शुभानैर्वोचेस्तन्नो हरिवो यत्ते अस्मे ।
महाँ२ इन्द्रो य ओजसा कदा चन स्तरीरसि कदा चन प्रयुच्छसि ॥१०॥ २७
आ तत्त इन्द्राय वः पनन्ताभि य ऊर्वं गोमन्तं तितृत्सान् ।
सकृत्स्वं ये पुरुपुत्रां महीꣳ सहस्रधारां बृहतीं दुदुक्षन् ॥११॥ २८
इमां ते धियं प्र भरे महो महीमस्य स्तोत्रे धिषणा यत्त आनजे ।
तमुत्सवे च प्रसवे च सासहिमिन्द्रं देवासः शवसामदन्नु ॥१२॥ (२) २९

विभ्राड् बृहत्पिबतु सोम्यं मध्वायुर्दधद्यज्ञपता अविहुतम् ।
वातजूतो यो अभिरक्षति त्मना प्रजाः पुपोष पुरुधा वि राजति ॥१॥ ३०
उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् ॥२॥ ३१
येना पावक चक्षसा भुरण्यन्तं जनाँ२ अनु । त्वं वरुण पश्यसि ॥३॥ ३२ [१८१०]

दैव्या अध्वर्यू आ गतꣳ रथेन सूर्यत्वचा। मध्वा यज्ञꣳ समञ्जाथे।
तं प्रत्नथायं वेनश्चोदयच्चित्रं देवानाम् ॥४॥ ३३
आ न इळाभिर्विदथे सुशस्ति विश्वानरः सविता देव एतु।
अपि यथा युवानो मत्सथा नो विश्वं जगदभिपित्वे मनीषा ॥५॥ ३४
यदद्य कच्च वृत्रहन्नुदगा अभि सूर्य। सर्वं तदिन्द्र ते वशे ॥६॥ ३५
तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य। विश्वमा भासि रोचनम् ॥७॥ ३६
तत्सूर्यस्य देवत्वं तन्महित्वं मध्या कर्तोर्विततꣳ सं जभार।
यदेदयुक्त हरितः सधस्थादाद्रात्री वासस्तनुते सिमस्मै ॥८॥ ३७
तन्मित्रस्य वरुणस्याभिचक्षे सूर्यो रूपं कृणुते द्योरुपस्थे।
अनन्तमन्यद्रुशदस्य पाजः कृष्णमन्यद्धरितः सं भरन्ति ॥९॥ ३८
बण्महाँ२ असि सूर्य बळादित्य महाँ२ असि।
महस्ते सतो महिमा पनस्यतेऽद्धा देव महाँ२ असि ॥१०॥ ३९
बट् सूर्य श्रवसा महाँ२ असि सत्रा देव महाँ२ असि।
मह्ना देवानामसुर्यः पुरोहितो विभु ज्योतिरदाभ्यम् ॥११॥ ४०
श्रायन्त इव सूर्यं विश्वेदिन्द्रस्य भक्षत।
वसूनि जाते जनमान ओजसा प्रति भागं न दीधिम ॥१२॥ ४१
अद्या देवा उदिता सूर्यस्य निरꣳहसः पिपृता निरवद्यात्।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥१३॥ ४२
आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च।
हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥१४॥ (३) ४३

प्र वावृजे सुप्रया बर्हिरेषामा विश्पतीव बीरिट इयाते।
विशामक्तोरुषसः पूर्वहूतौ वायुः पूषा स्वस्तये नियुत्वान् ॥१॥ ४४
इन्द्रवायू बृहस्पतिं मित्राग्निं पूषणं भगम्। आदित्यान्मारुतं गणम् ॥२॥ ४५
वरुणः प्राविता भुवन्मित्रो विश्वाभिरूतिभिः। करतां नः सुराधसः ॥३॥ ४६
अधि न इन्द्रैषां विष्णो सजात्यानाम्। इता मरुतो अश्विना।
तं प्रत्नथायं वेनश्चोदयधे देवास आ न इळाभिर्विश्वेभिः सोम्यं मध्वोमासश्चर्षणीधृतः ॥४॥ ४७
अग्न इन्द्र वरुण मित्र देवाः शर्धः प्र यन्त मारुतोत विष्णो।
उभा नासत्या रुद्रो अध ग्नाः पूषा भगः सरस्वती जुषन्त ॥५॥ ४८ [१८२६]

इन्द्राग्नी मित्रावरुणादितिꣳ स्वः पृथिवीं द्यां मरुतः पर्वताँ२ अपः ।
हुवे विष्णुं पूषणं ब्रह्मणस्पतिं भगं नु शꣳसꣳ सवितारमूतये ॥६॥ ४९
अस्मे रुद्रा मेहना पर्वतासो वृत्रहत्ये भरहूतौ सजोषाः ।
यः शꣳसते स्तुवते धायि पज्र इन्द्रज्येष्ठा अस्माँ२ अवन्तु देवाः ॥७॥ ५०
अर्वाञ्चो अद्या भवता यजत्रा आ वो हार्दि भयमानो व्ययेयम् ।
त्राध्वं नो देवा निजुरो वृकस्य त्राध्वं कर्तादवपदो यजत्राः ॥८॥ ५१
विश्वे अद्य मरुतो विश्व ऊती विश्वे भवन्त्वग्नयः समिद्धाः ।
विश्वे नो देवा अवसा गमन्तु विश्वमस्तु द्रविणं वाजो अस्मे ॥९॥ ५२
विश्वे देवाः शृणुतेमꣳ हवं मे ये अन्तरिक्षे य उप द्यवि ष्ठ ।
ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन्बर्हिषि मादयध्वम् ॥१०॥ ५३
देवेभ्यो हि प्रथमं यज्ञियेभ्योऽमृतत्वꣳ सुवसि भागमुत्तमम् ।
आदिद्दामानꣳ सवितर्व्यूर्णुषेऽनूचीना जीविता मानुषेभ्यः ॥११॥ (४) ५४

प्र वायुमच्छा बृहती मनीषा बृहद्रयिं विश्ववारꣳ रथप्राम् ।
द्युतद्यामा नियुतः पत्यमानः कविः कविमियक्षसि प्रयज्यो ॥१॥ ५५
इन्द्रवायू इमे सुता उप प्रयोभिरा गतम् । इन्दवो वामुशन्ति हि ॥२॥ ५६
मित्रꣳ हुवे पूतदक्षं वरुणं च रिशादसम् । धियं घृताचीꣳ साधन्ता ॥३॥ ५७
दस्रा युवाकवः सुता नासत्या वृक्तबर्हिषः । आ यातꣳ रुद्रवर्तनी ।
तं प्रत्नथायं वेनश्चोदयत् ॥४॥ ५८
विदद्यदी सरमा रुग्णमद्रेर्महि पाथः पूर्व्यꣳ सध्र्यक्कः ।
अग्रं नयत्सुपद्यक्षराणामच्छा रवं प्रथमा जानती गात् ॥५॥ ५९
नहि स्पशमविदन्नन्यमस्माद्वैश्वानरात्पुर एतारमग्नेः ।
एमेनमवृधन्नमृता अमर्त्यं वैश्वानरं क्षैत्रजित्याय देवाः ॥६॥ ६०
उग्रा विघनिना मृध इन्द्राग्नी हवामहे । ता नो मृळात ईदृशे ॥७॥ ६१
उपास्मै गायता नरः पवमानायेन्दवे । अभि देवाँ२ इयक्षते ॥८॥ ६२
ये त्वाहिहत्ये मघवन्नवर्धन्ये शाम्बरे हरिवो ये गविष्टौ ।
ये त्वा नूनमनुमदन्ति विप्राः पिबेन्द्र सोमꣳ सगणो मरुद्भिः ॥९॥ ६३
जनिष्ठा उग्रः सहसे तुराय मन्द्र ओजिष्ठो बहुलाभिमानः ।
अवर्धन्निन्द्रं मरुतश्चिदत्र माता यद्वीरं दधनद्धनिष्ठा ॥१०॥ ६४ [१८४९]

आ तू न॑ इन्द्र वृत्रहन्नस्माक॑मर्धमा ग॑हि । महान्महीभि॑रूतिभि॑ः ॥११॥ ६५
त्वमि॑न्द्र प्रतूर्ति॑ष्वभि विश्वा॑ असि स्पृधः ।
अशस्तिहा ज॑निता वि॑श्वतूर॑सि त्वं तू॑र्य तरुष्यतः ॥१२॥ ६६
अनु॑ ते शुष्मं॑ तुरयं॑न्तमीयतुः क्षोणी शिशुं॑ न मातरा॑ ।
विश्वा॑स्ते स्पृधः श्नथयन्त मन्यवे॑ वृत्रं यदि॑न्द्र तूर्व॑सि ॥१३॥ ६७
यज्ञो देवानां॑ प्रत्ये॑ति सुम्नमादि॑त्यासो भव॑ता मृळयन्तः ।
आ वोऽर्वाची॑ सुमतिर्व॑वृत्यादꣳहोश्चि॑द्या व॑रिवोवित्त॑रासत् ॥१४॥ ६८
अद॑ब्धेभिः सवितः पायुभिष्ट्वꣳ शिवेभि॑रद्य परि॑ पाहि नो गय॑म् ।
हिर॑ण्यजिह्वः सुवि॑ताय नव्य॑से रक्षा माकि॑र्नो अघश॑ꣳस ईशत ॥१५॥ (५) ६९

प्र वीरया शुच॑यो दद्रिरे वामध्वर्युभि॑र्मधुमन्तः सुतास॑ः ।
वह॑ वायो नियुतो॑ याह्यच्छा पिबा॑ सुतस्यान्ध॑सो मदा॑य ॥१॥ ७०
गाव॑ उपावतावतं मही यज्ञस्य॑ रप्सुदा॑ । उभा कर्णा॑ हिरण्यया॑ ॥२॥ ७१
काव्य॑योराजाने॑षु क्रत्वा दक्ष॑स्य दुरोणे । रिशाद॑सा सधस्थ आ ॥३॥ ७२
दैव्या॑ अध्वर्यू आ ग॑तꣳ रथे॑न सूर्य॑त्वचा ।
मध्वा॑ यज्ञꣳ सम॑ञ्जाथे । तं प्रत्नथा॑यं वेनश्चो॑दयत् ॥४॥ ७३
तिरश्ची॑नो वित॑तो रश्मिरे॑षामधः स्वि॑दासी३दुपरि॑ स्विदासी३त् ।
रेतोधा आ॑सन्महिमान॑ आसन्त्स्वधा अवस्तात्प्रय॑तिः परस्ता॑त् ॥५॥ ७४
आ रोद॑सी अपृणदा स्व॑र्महज्जातं यदे॑नमपसो अधा॑रयन् ।
सो अ॑ध्वराय परि॑ णीयते कविरत्यो न वाज॑सातये चनो॑हितः ॥६॥ ७५
उक्थेभि॑र्वृत्रहन्त॑मा या म॑न्दाना चिदा गिरा । आङ्गूषै॑राविवा॑सतः ॥७॥ ७६
उप॑ नः सूनवो गिर॑ः शृण्वन्त्वमृत॑स्य ये । सुमृळीका भ॑वन्तु नः ॥८॥ ७७
ब्रह्मा॑णि मे मतयः शꣳ सुतासः शुष्म॑ इयर्ति प्रभृ॑तो मे अद्रिः ।
आ शा॑सते प्रति॑ हर्य॑न्त्युक्थेमा हरी॑ वहतस्ता नो अच्छ॑ ॥९॥ ७८
अनु॑त्तमा ते॑ मघवन्नकि॑र्नु न त्वावाँ॑२ अस्ति देवता विदा॑नः ।
न जाय॑मानो नश॑ते न जातो यानि॑ करिष्या कृ॑णुहि प्र॑वृद्ध ॥१०॥ ७९
तदिदा॑स भुव॑नेषु ज्येष्ठं यतो॑ जज्ञ उग्रस्त्वे॑षनृ॑म्णः ।
सद्यो ज॑ज्ञानो नि रि॑णाति शत्रूननु यं विश्वे॑ मदन्त्यूमा॑ः ॥११॥ ८० [१८१८]

इमा उं त्वा पुरूवसो गिरों वर्धन्तु या मर्म ।
पावकवंर्णाः शुचंयो विपश्चितोऽभि स्तोमैरनूषत ॥१२॥ ८१
यस्यायं विश्व आर्यो दासः शेवधिपा अरिः ।
तिरश्चिदर्ये रुशमे पवींरवि तुभ्येत्सो अंज्यते रयिः ॥१३॥ ८२
अयꣳ सहस्रमृषिभिः सहस्कृतः समुद्र इंव पप्रथे ।
सत्यः सो अंस्य महिमा गृणे शवों यज्ञेषु विप्रराज्यें ॥१४॥ ८३
अदंब्धेभिः सवितः पायुभिष्ट्वꣳ शिवेभिरद्य परिं पाहि नो गयंम् ।
हिरंण्यजिह्वः सुविताय नव्यंसे रक्षा माकिर्नो अघशꣳस ईशत ॥१५॥ (६) ८४ [१८६२]

अस्याजरासः सप्तदश ॥१७॥ आपश्चिद् द्वादश ॥१२॥ विभ्राद् चतुर्दश ॥१४॥ प्रवावृज एकादश ॥११॥
प्रवायुं पञ्चदश ॥१५॥ प्रदीरयेति च पञ्चदश ॥१५॥ षडनुवाकेषु चतुरशीतिः ॥८४॥
॥ इति शुक्लयजुःकाण्वसंहितायां द्वात्रिंशोऽध्यायः ॥३२॥

## अथ त्रयस्त्रिंशोऽध्यायः ।

यज्जाग्रतो दूरमुदैति दैवं तदुं सुप्तस्य तथैवैतिं ।
दूरंगमं ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसंकल्पमस्तु ॥१॥ १
पितुं नु स्तोषं महो धर्माणं तविषीम् । यस्य त्रितो व्योजसा वृत्रं विपर्वमर्दयत् ॥२॥ २
अन्विदंनुमते त्वं मन्यांसै शं चं नस्कृधि ।
क्रत्वे दक्षाय नो हिनु प्र ण आयूꣳषि तारिषः ॥३॥ ३
सिनींवालि पृथुंष्टुके या देवानामसि स्वसा । जुषस्व हव्यमाहुतं प्रजां देवि दिदिड्ढि नः ॥४॥ ४
पञ्च नद्यः सरस्वतीमपिं यन्ति सस्रोतसः । सरस्वती तु पञ्चधा सो देशेऽभवत्सरित् ॥५॥ ५
त्वमग्ने प्रथमो अङ्गिरा ऋषिर्देवो देवानामभवः शिवः सखा ।
तव व्रते कवयो विद्मनापसोऽजायन्त मरुतो भ्राजदृष्टयः ॥६॥ ६
त्वं नों अग्ने तव देव पायुभिर्मघोनों रक्ष तन्वश्च वन्द्य ।
त्राता तोकस्य तनये गवामस्यनिमेषꣳ रक्षमाणस्तव व्रते ॥७॥ ७
उत्तानायामव भरा चिकित्वान्त्सद्यः प्रवींता वृषणं जजान ।
अरुषस्तूपो रुशदस्य पाज इळायास्पुत्रो वयुनेऽजनिष्ट ॥८॥ ८
इळायास्त्वा पदे वयं नाभा पृथिव्या अधिं ।
जातवेदो निधीमह्यग्ने हव्याय वोळ्हवे ॥९॥ ९ [१८७१]

प्र मन्महे शवसानाय शूषमाङ्गूषं गिर्वणसे अङ्गिरस्वत् ।
सुवृक्तिभिः स्तुवत ऋग्मियायार्चामार्कं नरे विश्रुताय ॥१०॥ १०
प्र वो महे महि नमो भरध्वमाङ्गूष्यꣳ शवसानाय साम ।
येना नः पूर्वे पितरः पदज्ञा अर्चन्तो अङ्गिरसो गा अविन्दन् ॥११॥ ११
इच्छन्ति त्वा सोम्यासः सखायः सुन्वन्ति सोमं दधति प्रयाꣳसि ।
तितिक्षन्ते अभिशस्तिं जनानामिन्द्र त्वदा कश्चन हि प्रकेतः ॥१२॥ १२
न ते दूरे परमा चिद्रजाꣳस्या तु प्र याहि हरिवो हरिभ्याम् ।
स्थिराय वृष्णे सवना कृतेमा युक्ता ग्रावाणः समिधाने अग्नौ ॥१३॥ १३
अषाळ्हं युत्सु पृतनासु पप्रिꣳ स्वर्षामप्सां वृजनस्य गोपाम् ।
भरेषुजाꣳ सुक्षितिꣳ सुश्रवसं जयन्तं त्वामनु मदेम सोम ॥१४॥ १४
सोमो धेनुꣳ सोमो अर्वन्तमाशुꣳ सोमो वीरं कर्मण्यं ददाति ।
सादन्यं विदथ्यꣳ सभेयं पितृश्रवणं यो ददाशदस्मै ॥१५॥ १५
त्वमिमा ओषधीः सोम विश्वास्त्वमपो अजनयस्त्वं गाः ।
त्वमा ततन्थोर्वन्तरिक्षं त्वं ज्योतिषा वि तमो ववर्थ ॥१६॥ १६
देवेन नो मनसा देव सोम रायो भागꣳ सहसावन्नभि युध्य ।
मा त्वा तनदीशिषे वीर्यस्योभयेभ्यः प्रचिकित्सा ग इष्टौ ॥१७॥ १७
अष्टौ व्यख्यत्ककुभः पृथिव्यास्त्री धन्व योजना सप्त सिन्धून् ।
हिरण्याक्षः सविता देव आगाद्दधद्रत्ना दाशुषे वार्याणि ॥१८॥ १८
हिरण्यपाणिः सविता विचर्षणिरुभे द्यावापृथिवी अन्तरीयते ।
अपामीवां बाधते वेति सूर्यमभि कृष्णेन रजसा द्यामृणोति ॥१९॥ १९
हिरण्यहस्तो असुरः सुनीथः सुमृळीकः स्ववा यात्वर्वाङ् ।
अपसेधन्रक्षसो यातुधानानस्थाद्देवः प्रतिदोषं गृणानः ॥२०॥ २०
ये ते पन्थाः सवितः पूर्व्यासोऽरेणवः सुकृता अन्तरिक्षे ।
तेभिर्नो अद्य पथिभिः सुगेभी रक्षा च नो अधि च ब्रूहि देव ॥२१॥ २१
उभा पिबतमश्विनोभा नः शर्म यच्छतम् । अविद्रियाभिरूतिभिः ॥२२॥ २२
अप्नस्वतीमश्विना वाचमस्मे कृतं नो दस्रा वृषणा मनीषाम् ।
अद्यूत्येऽवसे नि ह्वये वां वृधे च नो भवतं वाजसातौ ॥२३॥ २३ [१८८५]

द्युभिरक्तुभिः परि पातमस्मानरिष्टेभिरश्विना सौभगेभिः ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥२४॥ २४
आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च ।
हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥२५॥(१) २५

आ रात्रि पार्थिवꣳ रजः पितुरप्रायि धामभिः ।
दिवः सदाꣳसि बृहती वि तिष्ठस आ त्वेषं वर्तते तमः ॥१॥ २६
उपस्तच्चित्रमा भरास्मभ्यं वाजिनीवति । येन तोकं च तनयं च धामहे ॥२॥ २७
प्रातर्जितं भगमुग्रꣳ हुवेम वयं पुत्रमदितेर्यो विधर्ता ।
आध्रश्चिद्यं मन्यमानस्तुरश्चिद्राजा चिद्यं भगं भक्षीत्याह ॥३॥ २८
पूषन्तव व्रते वयं न रिष्येम कदा चन । स्तोतारस्त इहस्मसि ॥४॥ २९
पथस्पथः परिपतिं वचस्या कामेन कृतो अभ्यानळर्कम् ।
स नो रासच्छुरुधश्चन्द्राग्रा धियंधियꣳ सीषधाति प्र पूषा ॥५॥ ३०
त्रीणि पदा वि चक्रमे विष्णुर्गोपा अदाभ्यः । अतो धर्माणि धारयन् ॥६॥ ३१
तद्विप्रासो विपन्यवो जागृवाꣳसः समिन्धते । विष्णोर्यत्परमं पदम् ॥७॥ ३२
घृतवती भुवनानामभिश्रियोर्वी पृथ्वी मधुदुघे सुपेशसा ।
द्यावापृथिवी वरुणस्य धर्मणा विष्कभिते अजरे भूरिरेतसा ॥८॥ ३३
ये नः सपत्ना अप ते भवन्त्विन्द्राग्निभ्यामव बाधामहे तान् ।
वसवो रुद्रा आदित्या उपरिस्पृशं मोग्रं चेत्तारमधिराजमक्रन् ॥९॥ ३४
आ नासत्या त्रिभिरेकादशैरिह देवेभिर्यातं मधुपेयमश्विना ।
प्रायुस्तारिष्टं नी रपाꣳसि मृक्षतꣳ सेधतं द्वेषो भवतꣳ सचाभुवा ॥१०॥ ३५
एष व स्तोमो मरुत इयं गीर्मान्दार्यस्य मान्यस्य कारोः ।
एषा यासीष्ट तन्वे वयां विद्यामेषं वृजनं जीरदानुम् ॥११॥ ३६
सहस्तोमाः सहछन्दस आवृतः सहप्रमा ऋषयः सप्त दैव्याः ।
पूर्वेषां पन्थामनुदृश्य धीरा अन्वालेभिरे रथ्यो न रश्मीन् ॥१२॥ ३७
आयुष्यं वर्चस्यꣳ रायस्पोषमौद्भिदम् ।
इदꣳ हिरण्यं वर्चस्वज्जैत्रायाविशतादु माम् ॥१३॥ ३८ [१९००]

न तद्रक्षा॑ꣳसि न पि॑शाचास्त॑रन्ति दे॒वाना॒मोज॑ः प्रथम॒जꣳ ह्ये॒तत् ।
यो बि॒भर्ति॑ दाक्षाय॒णꣳ हिर॑ण्य॒ꣳ स दे॒वेषु॑ कृणुते दी॒र्घमायु॒ः स म॑नु॒ष्ये॑षु कृणुते दी॒र्घमायु॑ः॥१४॥ ३९
यदाब॑ध्नन्दाक्षाय॒णा हिर॑ण्यꣳ श॒तानी॑काय सुमन॒स्यमा॑नाः।
तन्म॒ आ ब॑ध्नामि श॒तशा॑रदायायु॑ष्माञ्जरद॑ष्टि॒र्यथास॑म् ॥१५॥ ४०
उ॒त नोऽहि॑र्बु॒ध्न्य॑ः शृणोत्व॒ज एक॑पात्पृ॒थि॒वी स॑मु॒द्रः ।
विश्वे॑ दे॒वा ऋ॑ता॒वृधो॑ हु॒वा॒ना स्तु॒ता मन्त्रा॑ः कविश॒स्ता अ॑वन्तु ॥१६॥ ४१
इ॒मा गिर॑ आदि॒त्येभ्यो॑ घृ॒तस्न॑ूः स॒नाद्राज॑भ्यो जु॒ह्वा॑ जुहोमि ।
शृ॒णोतु॑ मि॒त्रो अ॑र्य॒मा भगो॑ नस्तुविजा॒तो वरु॑णो॒ दक्षो॒ अꣳश॑ः ॥१७॥ ४२
स॒प्त ऋष॑यः॒ प्रति॑हिता॒ः शरी॑रे स॒प्त र॑क्षन्ति॒ सद॒मप्र॑मादम् ।
स॒प्ताप॒ः स्वप॑तो लो॒कमी॑यु॒स्तत्र॑ जागृ॒तो॒ अस्व॑प्नजौ सत्र॒सदौ॑ च दे॒वौ ॥१८॥ ४३
उत्ति॑ष्ठ ब्रह्मणस्पते देव॒यन्त॑स्त्वेमहे ।
उप॒ प्र य॑न्तु म॒रुत॑ः सु॒दान॑व॒ इन्द्र॑ प्रा॒शूर्भ॑वा॒ सचा॑ ॥१९॥ ४४
प्र नू॒नं ब्रह्म॑ण॒स्पति॒र्मन्त्र॑ं वदत्यु॒क्थ्य॑म् ।
यस्मि॒न्निन्द्रो॒ वरु॑णो मि॒त्रो अ॑र्य॒मा दे॒वा ओका॑ꣳसि चक्रि॒रे ॥२०॥ ४५
ब्रह्म॑णस्पते॒ त्वम॒स्य य॒न्ता सू॒क्तस्य॑ बोधि॒ तन॑यं च जिन्व ।
विश्वं॒ तद्भ॒द्रं यदव॑न्ति दे॒वा बृ॒हद्व॑देम वि॒दथे॑ सु॒वीरा॑ः ।
य इ॒मा विश्वा॑ वि॒श्वक॑र्मा॒ यो न॑ः पि॒तान्न॑पते॒ऽन्नस्य नो देहि ॥२१॥ (२) ४६ [१९०८]

यज्जाग्रतः पञ्चविंशतिः ॥ २५ ॥ आराश्येकविंशतिः ॥ २१ ॥ द्वयोरनुवाकयोः षट्चत्वारिंशत् ॥४६॥
॥ इति शुक्लयजुःकाण्वसंहितायां त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

## अथ चतुस्त्रिंशोऽध्यायः ।

देव॑ सवितः॒ प्रसु॑व य॒ज्ञं प्रसु॑व य॒ज्ञप॑तिं॒ भगा॑य ।
दि॒व्यो ग॑न्ध॒र्वः के॑त॒पूः केत॑ं नः पुनातु वा॒चस्पति॒र्वाच॑ं नः स्वदतु ॥१॥ १
तत्स॑वि॒तुर्वरे॑ण्यं॒ भर्गो॑ दे॒वस्य॑ धीमहि । धियो॒ यो न॑ः प्रचो॒दया॑त् ॥२॥ २
विश्वा॑नि देव सवितर्दुरि॒तानि॒ परा॑ सुव । यद्भ॒द्रं तन्न॒ आ सु॑व ॥३॥ ३
वि॒भ॒क्तार॑ꣳ हवामहे॒ वसो॑श्चि॒त्रस्य॒ राध॑सः । स॒वि॒तार॒ं नृ॒चक्ष॑सम् ॥४॥ ४ [१९१२]

ब्रह्मणे ब्राह्मणं क्षत्राय राजन्यं मरुद्भ्यो वैश्यं तपसे शूद्रं तमसे तस्करं नारकाय
वीरहणम् । पाप्मने क्लीबमाक्रयाया अयोगूं कामाय पुंश्चलूमतिक्रुष्टाय मागधम् ॥५॥ ५
नृत्ताय सूतं गीताय शैलूषं धर्माय सभाचरं नरिष्ठायै भीमलम् । नर्माय रेभꣳ हसाय
कारिमानन्दाय स्त्रीषखं प्रमदे कुमारीपुत्रं मेधायै रथकारं धैर्याय तक्षाणम् ॥६॥ ६
तपसे कौलालं मायायै कर्मारꣳ रूपाय मणिकारꣳ शुभे वपꣳ शरव्याया इषुकारꣳ
हेत्यै धनुष्कारम् । कर्मणे ज्याकारं दिष्टाय रज्जुसर्जं मृत्यवे मृगयुमन्तकाय श्वनिनम् ॥७॥ ७
नदीभ्यः पौञ्जिष्टमृक्षीकाभ्यो नैषादं पुरुषव्याघ्राय दुर्मदं [illegible]र्वाप्सरोभ्यो व्रात्यम् ।
प्रयुग्भ्य उन्मत्तꣳ सर्पदेवजनेभ्योऽप्रतिपदमयेभ्यः [illegible]र्यताया अकितवं
पिशाचेभ्यो विदलकारीं यातुधानेभ्यः कण्टकीकारीम् ॥८॥ (१) ८

संधये जारं गेहायोपपतिमार्त्यै परिवित्तं निर्ऋत्यै परिविविदानमराध्या एदिधिषुःपतिं
निष्कृत्यै पेशस्कारीꣳ संज्ञानाय स्मरकारीम् । प्रकामोद्यायोपसदं वर्णायानुरुधं
बलायोपदाम् ॥१॥ ९

उत्सादेभ्यः कुब्जं प्रमुदे वामनं द्वार्भ्यः स्रामꣳ स्वप्नायान्धमधर्माय बधिरं पवित्राय
भिषजम् । प्रज्ञानाय नक्षत्रदर्शमाशिक्षायै प्रश्निनमुपशिक्षाया अभिप्रश्निनं मर्यादायै
प्रश्नविवाकम् ॥२॥ १०

अर्मेभ्यो हस्तिपं जवायाश्वपं पुष्ट्यै गोपालं वीर्यायाविपालं तेजसेऽजपालमिरायै कीनाशम् ।
कीलालाय सुराकारं भद्राय गृहपꣳ श्रेयसे वित्तधमाध्यक्ष्यायानुक्षत्तारम् ॥३॥ ११

भायै दार्वाहारं प्रभाया अग्न्येधं ब्रध्नस्य विष्टपायाभिषेक्तारं वर्षिष्ठाय नाकाय परिवेष्टारम् ।
देवलोकाय पेशितारं मनुष्यलोकाय प्रकरितारꣳ सर्वेभ्यो लोकेभ्य उपसेक्तारमव ऋत्यै
वधायोपमन्थितारं मेधाय वासःपल्पूलीं प्रकामाय रजयित्रीम् ॥४॥ १२

ऋतये स्तेनहृदयं वैरहत्याय पिशुनं विविक्त्यै क्षत्तारमौपद्रष्ट्र्यायानुक्षत्तारं
बलायानुचरं भूम्ने परिष्कन्दम् । प्रियाय प्रियवादिनमरिष्ट्या अश्वसादꣳ स्वर्गाय
लोकाय भागदुघं वर्षिष्ठाय नाकाय परिवेष्टारम् ॥५॥ (२) १३

मन्यवेऽयस्तापं क्रोधाय निसरं योगाय योक्तारꣳ शोकायाभिसर्तारं क्षेमाय विमोक्तार-
मुत्कूलनिकूलेभ्यस्त्रिष्ठिनम् । वपुषे मानस्कृतꣳ शीलायाञ्जनीकारीं निर्ऋत्यै कोशकारीं
यमायासूम् ॥१॥ १४ [१९९१]

यमार्य यमुसूमथर्वभ्योऽवतोकाᳬ संवत्सराय पर्यायिणीं परिवत्सरायाविजातामिदावत्सराया-
तीत्वरीमिद्वत्सरायातिष्कद्वरीम्। वत्सराय विजर्जराᳬ संवत्सराय पलिक्नीमृभुभ्योऽजिनसन्धᳬ
साध्येभ्यश्चर्मम्नम् ॥२॥ १५

सरोभ्यो धैवरमुपस्थावराभ्यो दाशं वैशन्ताभ्यो बैन्दं नड्वलाभ्यः शौष्कलम्।
पाराय मार्गारमवाराय कैवर्तं तीर्थेभ्य आन्दं विषमेभ्यो मैनालम्।
स्वनेभ्यः पर्णकं गुहाभ्यः किरातᳬ सानुभ्यो जम्भकं पर्वतेभ्यः किंपूरुषम् ॥३॥ १६

बीभत्सायै पौल्कसं वर्णाय हिरण्यकारं तुलायै वाणिजं पश्चादोषाय ग्लाविनं विश्वेभ्यो
भूतेभ्यः सिध्मलम्। भूत्यै जागरणमभूत्यै स्वपनमार्त्यै जनवादिनं व्यृद्ध्या अपगल्भᳬ
संशराय प्रच्छिदम् ॥४॥ १७

अक्षराजाय कितवं कृतायादिनवदर्शं त्रेतायै कल्पिनं द्वापरायाधिकल्पिनमास्कन्दाय
सभास्थाणुं मृत्यवे गोव्यच्छमन्तकाय गोघातम्। क्षुधे यो गां विकृन्तन्तं भिक्षमाण
उपतिष्ठति दुष्कृताय चरकाचार्यं पाप्मने सैलगम् ॥५॥ (३) १८

प्रतिश्रुत्काया अर्तनं घोषाय भषमन्ताय बहुवादिनमनन्ताय मूकᳬ शब्दायाडम्बरा-
घातम्। महसे वीणावादं क्रोशाय तूणवध्ममवरस्पराय शङ्खध्मं वनाय वनपमन्य-
तोऽरण्याय दावपम् ॥१॥ १९

नर्माय पुंश्चलूᳬ हसाय कारिं यादसे शाबल्यां ग्रामण्यं गणकमभिक्रोशकं तान्महसे।
वीणावादं पाणिघ्नं तूणवध्मं तान्नृत्तायानन्दाय तलवम् ॥२॥ २०

अग्नये पीवानं पृथिव्यै पीठसर्पिणं वायवे चाण्डालमन्तरिक्षाय वᳬशनर्तिनं दिवे
खलतिᳬ सूर्याय हर्यक्षम्। नक्षत्रेभ्यः किर्मिरं चन्द्रमसे किलासमह्ने शुक्लं पिङ्गाक्षᳬ
रात्र्यै कृष्णं पिङ्गाक्षम् ॥ ३ ॥ २१

अथैतानष्टौ विरूपाना लभतेऽतिशुक्लं चातिकृष्णं चातिदीर्घं चातिह्रस्वं च।
अतिस्थूलं चातिकृशं चातिकुल्वं चातिलोमशं चाशूद्रा अब्राह्मणास्ते प्राजापत्याः।
मागधः पुंश्चली क्लीबः कितवोऽशूद्रा अब्राह्मणास्ते प्राजापत्याः ॥४॥ (४) २२ [१९३०]

देव सवितरष्ट ॥ ८ ॥ संधये जारं पञ्च ॥ ५ ॥ मन्यवे पञ्च ॥ ५ ॥ प्रतिश्रुत्कायै चतस्रः ॥ ४ ॥
चतुर्ष्वनुवाकेषु द्वाविंशतिः ॥२२॥ इति शुक्लयजुःकाण्वसंहितायां चतुस्त्रिंशोऽध्यायः ॥३४॥

## अथ पञ्चत्रिंशोऽध्यायः ।

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिꣳ सर्वत स्पृत्वात्यतिष्ठद्दशाङ्गुलम् ॥१॥ १
पुरुष एवेदꣳ सर्वं यद्भूतं यच्च भाव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥२॥ २
एतावानस्य महिमातो ज्यायाꣳश्च पूरुषः ।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥३॥ ३
त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः ।
ततो विष्वङ् व्यक्रामत्साशनानशने अभि ॥४॥ ४
ततो विराळजायत विराजो अधि पूरुषः ।
स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥५॥ ५
तस्माद्यज्ञात्सर्वहुतः संभृतं पृषदाज्यम् ।
पशूꣳस्ताꣳश्चक्रे वायव्यानारण्या ग्राम्याश्च ये ॥६॥ ६
तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे ।
छन्दाꣳसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥७॥ ७
तस्मादश्वा अजायन्त ये के चोभयादतः ।
गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः ॥८॥ ८
तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमग्रतः ॥
तेन देवा अयजन्त साध्या ऋषयश्च ये ॥९॥ ९
यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् ।
मुखं किमस्यासीत्किं बाहू किमूरू पादा उच्येते ॥१०॥ १०
ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः ।
ऊरू तदस्य यद्वैश्यः पद्भ्याꣳ शूद्रो अजायत ॥ ११ ॥ ११
चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत ।
श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत ॥१२॥ १२
नाभ्या आसीदन्तरिक्षꣳ शीर्ष्णो द्यौः समवर्तत ।
पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ२ अकल्पयन् ॥ १३ ॥ १३ [११४३]

यत्पुरुषेण हविषा देवा यज्ञमतन्वत ।
वसन्तोऽस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥१४॥ १४
सप्तास्यासन्परिधयस्त्रिः सप्त समिधः कृताः ।
देवा यद्यज्ञं तन्वाना अबध्नन्पुरुषं पशुम् ॥१५॥ १५
यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥१६॥ (१) १६

अद्भ्यः संभृतः पृथिव्यै रसाच्च विश्वकर्मणः समवर्तताग्रे ।
तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देवत्वमाजानमग्रे ॥१॥ १७
वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् ।
तमेव विदित्वाति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥२॥ १८
प्रजापतिश्चरति गर्भे अन्तरजायमानो बहुधा वि जायते ।
तस्य योनिं परि पश्यन्ति धीरास्तस्मिन्ह तस्थुर्भुवनानि विश्वा ॥३॥ १९
यो देवेभ्य आतपति यो देवानां पुरोहितः ।
पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये ॥४॥ २०
रुचं ब्राह्मं जनयन्तो देवा अग्रे तदब्रुवन् ।
यस्त्वैवं ब्राह्मणो विद्यात्तस्य देवा असन्वशे ॥५॥ २१
श्रीश्च ते लक्ष्मीश्च पत्न्या अहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ।
इष्णन्निषाणामुं म इषाण सर्वलोकं म इषाण ॥६॥ (२) २२

तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः ।
तदेव शुक्रं तद् ब्रह्म तदापः तत्प्रजापतिः ॥१॥ २३
सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि ।
नैनमूर्ध्वं न तिर्यञ्चं न मध्ये परि जग्रभत् ॥२॥ २४
न तस्य प्रतिमा अस्ति यस्य नाम महद्यशः ।
हिरण्यगर्भ इत्येषः ॥३॥ २५
एषो ह देवः प्रदिशोऽनु सर्वाः पूर्वो ह जातः स उ गर्भे अन्तः ।
स एव जातः स जनिष्यमाणः प्रत्यङ् जनास्तिष्ठति सर्वतोमुखः ।
यस्मान्न जात इत्येषः ॥४॥ २६ [१९५६]

वेनस्तत्पश्यन्निहितं गुहा सद्यत्र विश्वं भवत्येकनीळम् ।
तस्मिन्निदꣳ सं च वि चैति सर्वꣳ स ओतः प्रोतश्च विभूः प्रजासु ॥५॥ २७
प्र तद्वोचेदमृतं नु विद्वान्गन्धर्वो धाम विभृतं गुहा सत् ।
त्रीणि पदानि निहिता गुहास्य यस्तानि वेद स पितुः पितासत् ॥६॥ २८
स नो बन्धुर्जनिता स विधाता धामानि वेद भुवनानि विश्वा ।
यत्र देवा अमृतमानशानास्तृतीये धामन्नध्यैरयन्त ॥७॥ २९
परीत्य भूतानि परीत्य लोकान्परीत्य सर्वाः प्रदिशो दिशश्च ।
उपस्थाय प्रथमजामृतस्यात्मनात्मानमभि सं विवेश ॥८॥ ३०
परि द्यावापृथिवी सद्य इत्वा परि लोकान्परि दिशः परि स्वः ।
ऋतस्य तन्तुं विततं विचृत्य तदपश्यत्तदभवत्तदासीत् ॥९॥ ३१
सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिं मेधामयासिषꣳ स्वाहा ॥१०॥ ३२
यां मेधां देवगणाः पितरश्चोपासते । तया मामद्य मेधयाग्ने मेधाविनं कुरु स्वाहा ॥११॥ ३३
इदं मे ब्रह्म च क्षत्रं चोभे श्रियमश्नुताम् ।
मयि देवा दधतु श्रियमुत्तमां तस्यै ते स्वाहा ॥१२॥ (३) ३४

अपेतो यन्तु पणयोऽसुम्ना देवपीयवः । अस्य लोकः सुतावतः ॥१॥ ३५
द्युभिरहोभिरक्तुभिर्व्यक्तं यमो ददात्ववसानमस्मै ।
सविता ते शरीरेभ्यः पृथिव्यां लोकमिच्छतु । तस्मै युज्यन्तामुस्रियाः ॥२॥ ३६
वायुः पुनातु सविता पुनात्वग्नेर्भ्राजसा सूर्यस्य वर्चसा । वि मुच्यन्तामुस्रियाः ॥३॥ ३७
अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता । गोभाज इत्किलासथ यत्सनवथ पूरुषम् ॥४॥ ३८
सविता ते शरीराणि मातुरुपस्थ आ वपतु । तस्मै पृथिवि शं भव ।
प्रजापतौ त्वा देवतायामुपोदके लोके नि दधाम्यसौ ॥५॥ ३९
परं मृत्यो अनु परेहि पन्थां यस्ते अन्य इतरो देवयानात् ।
चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजाꣳ रीरिषो मोत वीरान् ॥६॥ ४०
शं वातः शꣳ हि ते घृणिः शं ते भवन्त्विष्टकाः ।
शं ते भवन्त्वग्नयः पार्थिवासो मा त्वाभि शूशुचन् ॥ ७ ॥ ४१
कल्पन्तां ते दिशस्तुभ्यमापः शिवतमास्तुभ्यं भवन्तु सिन्धवः ।
अन्तरिक्षꣳ शिवं तुभ्यं कल्पन्तां ते दिशः सर्वाः ॥८॥ ४२ [११७२]

अश्मन्वती रीयते सꣳ रभध्वमुत्तिष्ठत प्र तरता सखायः ।
अत्रा जहीमोऽशिवा ये असञ्छिवान्वयमुत्तरेमाभि वाजान् ॥९॥ ४३
अपाघमप किल्बिषमप कृत्यामपो रपः ।
अपामार्ग त्वमस्मदप दुःष्वप्न्यꣳ सुव ॥१०॥ ४४
सुमित्रिया न आप ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु ।
योऽस्मान्द्वेष्टि यं च वयं द्विष्मः ॥११॥ ४५
अनड्वाहमन्वारभामहे स्वस्तये ।
स न इन्द्र इव देवेभ्यो वह्निः संतारणो भव ॥१२॥ ४६
उद्वयं तमसस्परि स्वः पश्यन्त उत्तरम् ।
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥१३॥ ४७
अग्न आयूꣳषि पवस आ सुवोर्जमिषं च नः ।
आरे बाधस्व दुच्छुनाम् ॥१४॥ ४८
आयुष्मानग्ने हविषा वृधानो घृतप्रतीको घृतयोनिरेधि ।
घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रमभि रक्षतादिमान्त्स्वाहा ॥१५॥ ४९
इमं जीवेभ्यः परिधिं दधामि मैषां नु गादपरो अर्थमेतम् ।
शतं जीवन्तु शरदः पुरूचीरन्तर्मृत्युं दधतां पर्वतेन ॥१६॥ ५०
परीमे गामनेषत पर्यग्निमहृषत । देवेष्वक्रत श्रवः क इमाँ२ आ दधर्षति ॥१७॥ ५१
क्रव्यादमग्निं प्र हिणोमि दूरं यमराज्यं गच्छतु रिप्रवाहः ।
इहैवायमितरो जातवेदा देवेभ्यो हव्यं वहतु प्रजानन् ॥१८॥ ५२
वह वपां जातवेदः पितृभ्यो यत्रैनान्वेत्थ निहितान्पराके ।
मेदसः कुल्या उप तान्त्स्रवन्तु सत्या एषामाशिषः सन्तु कामाः स्वाहा ॥१९॥ ५३
स्योना पृथिवि नो भवानृक्षरा निवेशनी ।
यच्छा नः शर्म सप्रथाः । अप नः शोशुचदघम् ॥२०॥ ५४
अस्मात्त्वमधि जातोऽसि त्वदयं जायतां पुनः । असौ स्वर्गाय लोकाय स्वाहा ।
अप नः शोशुचदघम् ॥ २१ ॥ (४) ५५ [ १९८५ ]

सहस्रशीर्षा षोडश ॥१६॥ अद्भ्यः संभृतः षट् ॥६॥ तदेवाग्निर्द्वादश ॥१२॥
अपेतो यन्त्वेकविंशतिः ॥२१॥ चतुरनुवाकेषु पञ्चपञ्चाशत् ॥ ५५ ॥
॥ इति शुक्लयजुःकाण्वसंहितायां पञ्चत्रिंशोऽध्यायः ॥३५॥

## अथ षट्त्रिंशोऽध्यायः ।

ऋचं वाचं प्र पद्ये मनो यजुः प्र पद्ये साम प्राणं प्र पद्ये चक्षुः श्रोत्रं प्र पद्ये ।
वागोजः सहौजो मयि प्राणापानौ ॥१॥ १
यन्मे छिद्रं चक्षुषो हृदयस्य मनसो वातितृण्णं बृहस्पतिर्मे तद्दधातु ।
शं नो भवतु भुवनस्य यस्पतिः ॥२॥ २
भूर्भुवः स्वः । तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥३॥ ३
कया नश्चित्र आ भुवदूती सदावृधः सखा । कया शचिष्ठया वृता ॥४॥ ४
कस्त्वा सत्यो मदानां मꣳहिष्ठो मत्सदन्धसः । दृळ्हा चिदारुजे वसु ॥५॥ ५
अभी षु णः सखीनामविता जरितॄणाम् । शतं भवास्यूतिभिः ॥६॥ ६
कया त्वं न ऊत्याभि प्र मन्दसे वृषन् । कया स्तोतृभ्य आ भर ॥७॥ ७
इन्द्रो विश्वस्य राजति । शं नो अस्तु द्विपदे शं चतुष्पदे ॥८॥ ८
शं नो मित्रः शं वरुणः शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पतिः शं नो विष्णुरुरुक्रमः ॥९॥ ९
शं नो वातः पवताꣳ शं नस्तपतु सूर्यः । शं नः कनिक्रदद्देवः पर्जन्यो अभि वर्षतु ॥१०॥ १०
अहानि शं भवन्तु नः शꣳ रात्रीः प्रति धीयताम् ।
शं न इन्द्राग्नी भवतामवोभिः शं न इन्द्रावरुणा रातहव्या ।
शं न इन्द्रापूषणा वाजसातौ शमिन्द्रासोमा सुविताय शं योः ॥११॥ ११
शं नो देवीरभिष्टय आपो भवन्तु पीतये । शं योरभि स्रवन्तु नः ॥१२॥ १२
स्योना पृथिवि नो भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथाः ॥१३॥ १३
आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे ॥१४॥ १४
यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः ॥१५॥ १५
तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ॥१६॥ १६
द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः ।
वनस्पतयः शान्तिः शान्तिरेव शान्तिः ॥१७॥ १७
दृते दृꣳह मा मित्रस्य मा चक्षुषा सर्वाणि भूतानि समीक्षन्ताम् ।
मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे । मित्रस्य चक्षुषा समीक्षामहे ॥१८॥ १८
दृते दृꣳह मा । ज्योक्ते संदृशि जीव्यासं ज्योक्ते संदृशि जीव्यासम् ॥१९॥ १९
नमस्ते हरसे शोचिषे नमस्ते अस्त्वर्चिषे ।
अन्याꣳस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यꣳ शिवो भव ॥२०॥ २० [२००५]

नमस्ते अस्तु विद्युते नमस्ते स्तनयित्नवे ।
नमस्ते भगवन्नस्तु यतः स्वः समीहसे ॥२१॥ २१
यतोयतः समीहसे ततो नो अभयं कुरु ।
शं नः कुरु प्रजाभ्योऽभयं नः पशुभ्यः ॥२२॥ २२
सुमित्रिया न आप ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु ।
योऽस्मान्द्वेष्टि यं च वयं द्विष्मः ॥२३॥ २३
तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् ।
पश्येम शरदः शतं जीवेम शरदः शतꣳ शृणुयाम शरदः शतम् ॥२४॥ (१) [२००९] २४

ऋचं वाचमित्येकानुवाके चतुर्विंशतिः ॥२४॥

॥ इति शुक्लयजुःकाण्वसंहितायां षट्त्रिंशोऽध्यायः ॥३६॥

## अथ सप्तत्रिंशोऽध्यायः ।

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । आ ददे नारिरसि ॥१॥ १
युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः ।
वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः ॥२॥ २
देवी द्यावापृथिवी मखस्य वामद्य शिरो राध्यासं देवयजने पृथिव्याः ।
मखाय त्वा मखस्य त्वा शीर्ष्णे ॥३॥ ३
देव्यो वम्रियो भूतस्य प्रथमजा मखस्य वोऽद्य शिरो राध्यासं देवयजने पृथिव्याः ।
मखाय त्वा मखस्य त्वा शीर्ष्णे ॥४॥ ४
इयत्यग्र आसीर्मखस्य तेऽद्य शिरो राध्यासं देवयजने पृथिव्याः ।
मखाय त्वा मखस्य त्वा शीर्ष्णे ॥५॥ ५
इन्द्रस्यौज स्थ मखस्य वोऽद्य शिरो राध्यासं देवयजने पृथिव्याः ।
मखाय त्वा मखस्य त्वा शीर्ष्णे । मखाय त्वा मखस्य त्वा शीर्ष्णे ।
मखाय त्वा मखस्य त्वा शीर्ष्णे ॥६॥ ६
प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता । अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नः ।
मखाय त्वा मखस्य त्वा शीर्ष्णे । मखाय त्वा मखस्य त्वा शीर्ष्णे ।
मखाय त्वा मखस्य त्वा शीर्ष्णे ॥७॥ ७ [२०१६]

मखस्य शिरोऽसि । मखाय त्वा मखस्य त्वा शीर्ष्णे । मखस्य शिरोऽसि ।
मखाय त्वा मखस्य त्वा शीर्ष्णे । मखस्य शिरोऽसि । मखाय त्वा मखस्य त्वा शीर्ष्णे ।
मखाय त्वा मखस्य त्वा शीर्ष्णे । मखाय त्वा मखस्य त्वा शीर्ष्णे ।
मखाय त्वा मखस्य त्वा शीर्ष्णे ॥८॥ ८

अश्वस्य त्वा वृष्णः शक्ना धूपयामि देवयजने पृथिव्याः । मखाय त्वा मखस्य त्वा शीर्ष्णे ।
अश्वस्य त्वा वृष्णः शक्ना धूपयामि देवयजने पृथिव्याः । मखाय त्वा मखस्य त्वा शीर्ष्णे ।
अश्वस्य त्वा वृष्णः शक्ना धूपयामि देवयजने पृथिव्याः । मखाय त्वा मखस्य त्वा शीर्ष्णे ।
मखाय त्वा मखस्य त्वा शीर्ष्णे । मखाय त्वा मखस्य त्वा शीर्ष्णे
मखाय त्वा मखस्य त्वा शीर्ष्णे ॥९॥ ९

ऋजवे त्वा साधवे त्वा सुक्षित्यै त्वा । मखाय त्वा मखस्य त्वा शीर्ष्णे ।
मखाय त्वा मखस्य त्वा शीर्ष्णे ।
मखाय त्वा मखस्य त्वा शीर्ष्णे ॥१०॥ (१) १०

यमाय त्वा मखाय त्वा सूर्यस्य त्वा तपसे ।
देवस्त्वा सविता मध्वानक्तु पृथिव्याः सꣳ स्पृशस्पाहि ।
अर्चिरसि शोचिरसि तपोऽसि ॥१॥ ११

अनाधृष्टा पुरस्तादग्नेराधिपत्य आयुर्मे दाः पुत्रवती दक्षिणत इन्द्रस्याधिपत्ये प्रजां मे दाः ।
सुषदा पश्चाद्देवस्य सवितुराधिपत्ये चक्षुर्मे दा आश्रुतिरुत्तरतो धातुराधिपत्ये रायस्पोषं मे दाः ।
विधृतिरुपरिष्टाद् बृहस्पतेराधिपत्य ओजो मे दा विश्वाभ्यो मा नाष्ट्राभ्यस्पाहि मनोरश्वासि ॥१२॥ १२
स्वाहा मरुद्भिः परि श्रीयस्व दिवः सꣳस्पृशस्पाहि । मधु मधु मधु ॥३॥ (२) १३

गर्भो देवानां पिता मतीनां पतिः प्रजानाम् ।
सं देवो देवेन सवित्रा गत सꣳ सूर्येण रोचते ॥१॥ १४
समग्निरग्निना गत सं दैवेन सवित्रा सꣳ सूर्येणारोचिष्ट ।
स्वाहा समग्निस्तपसा गत सं दैव्येन सवित्रा सꣳ सूर्येणारूरुचत ॥२॥ १५
धर्ता दिवो वि भाति तपसस्पृथिव्यां धर्ता देवो देवानाममर्त्यस्तपोजाः ।
वाचमस्मे नि यच्छ देवायुवम् ॥३॥ १६
अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तम् ।
स सध्रीचीः स विषूचीर्वसान आ वरीवर्ति भुवनेष्वन्तः ॥४॥ १७ [१०७३]

विश्वासां भुवां पते विश्वस्य मनसस्पते विश्वस्य वचसस्पते सर्वस्य वचसस्पते ।
देवश्रुत्त्वं देव घर्म देवो देवान्पाह्यत्र प्रावीरनु वां देववीतये ।
मधु माध्वीभ्यां मधु माधूचीभ्याम् ।
हृदे त्वा मनसे त्वा दिवे त्वा सूर्याय त्वा । ऊर्ध्वो अध्वरं दिवि देवेषु धेहि ॥५॥ १८
पिता नोऽसि पिता नो बोधि नमस्ते अस्तु मा मा हिꣳसीः ।
त्वष्टृमन्तस्त्वा सपेम पुत्रान्पशून्मयि धेह्यरिष्टाहꣳ सह पत्या भूयासम् ॥६॥ १९
अहः केतुना जुषताꣳ सुज्योतिर्ज्योतिषा स्वाहा ।
रात्रिः केतुना जुषताꣳ सुज्योतिर्ज्योतिषा स्वाहा ॥७॥ (३) २० [२०२९]

देवस्य त्वा दश ॥१०॥ यमाय तिस्रः ॥३॥ गर्भो देवानां सप्त ॥७॥ त्र्यनुवाकेषु विंशतिः ॥२०॥
॥ इति शुक्लयजुःकाण्वसंहितायां सप्तत्रिंशोऽध्यायः ॥३७॥

## अथाष्टत्रिंशोऽध्यायः ।

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ।
आ ददेऽदित्यै रास्नासि ॥१॥ १
इळ एह्यदित एहि सरस्वत्येहि । असावेह्यसावेह्यसावेहि ॥२॥ २
अदित्यै रास्नासीन्द्राण्या उष्णीषः । पूषासि घर्माय दीष्व ॥३॥ ३
अश्विभ्यां पिन्वस्व सरस्वत्यै पिन्वस्वेन्द्राय पिन्वस्व । स्वाहेन्द्रवत्स्वाहेन्द्रवत्स्वाहेन्द्रवत् ॥४॥ ४
यस्ते स्तनः शशयो यो मयोभूर्यो रत्नधा वसुविद्यः सुदत्रः ।
येन विश्वा पुष्यसि वार्याणि सरस्वति तमिह धातवेऽकः । उर्वन्तरिक्षमन्वेमि ॥५॥ ५
गायत्रं छन्दोऽसि त्रैष्टुभं छन्दोऽसि द्यावापृथिवीभ्यां त्वा परि गृह्णाम्यन्तरिक्षेणोप यच्छामि ।
इन्द्राश्विना मधुनः सारघस्य घर्मं पात वसवो यजत वाट् ।
स्वाहा सूर्यस्य रश्मये वृष्टिवनये ॥६॥ (१) ६
समुद्राय त्वा वाताय स्वाहा सरिराय त्वा वाताय स्वाहा ।
अनाधृष्याय त्वा वाताय स्वाहाप्रतिधृष्याय त्वा वाताय स्वाहा ॥
अवस्यवे त्वा वाताय स्वाहाशिमिदाय त्वा वाताय स्वाहा ॥१॥ ७
इन्द्राय त्वा वसुमते रुद्रवते स्वाहेन्द्राय त्वादित्यवते स्वाहा ।
इन्द्राय त्वाभिमातिघ्ने स्वाहा सवित्रे त्व ऋभुमते विभुमते वाजवते स्वाहा बृहस्पतये त्वा विश्वदेव्यावते स्वाहा ॥२॥ ८ [२०३७]

यमाय त्वाङ्गिरस्वते पितृमते स्वाहा । स्वाहा घर्माय स्वाहा घर्मः पित्रे ॥३॥ ९
विश्वा आशा दक्षिणसत्सर्वान्देवानयाडिह ।
स्वाहाकृतस्य घर्मस्य मधोः पिबतमश्विना ॥४॥ १०
दिवि धा इमं यज्ञमिमं यज्ञं दिवि धाः । स्वाहाग्नये यज्ञियाय शं यजुर्भ्यः ॥५॥ ११
अश्विना घर्मं पातꣳ हार्द्वानमहर्दिवाभिरूतिभिः ।
तन्त्रायिणे नमो द्यावापृथिवीभ्याम् ॥६॥ १२
अपातामश्विना घर्ममनु द्यावापृथिवी अमꣳसाताम् । इहैव रातयः सन्तु ॥७॥ १३
इषे पिन्वस्वोर्जे पिन्वस्व ब्रह्मणे पिन्वस्व क्षत्राय पिन्वस्व द्यावापृथिवीभ्यां पिन्वस्व ।
धर्मासि सुधर्मामेन्यस्मे नृम्णानि धारय ब्रह्म धारय क्षत्रं धारय विशं धारय ॥८॥(२) १४

स्वाहा पूष्णे शरसे स्वाहा ग्रावभ्यः स्वाहा प्रतिरवेभ्यः ।
स्वाहा पितृभ्य ऊर्ध्वबर्हिर्भ्यो घर्मपावभ्यः स्वाहा
द्यावापृथिवीभ्याꣳ स्वाहा विश्वेभ्यो देवेभ्यः ॥१॥ १५
स्वाहा रुद्राय रुद्रहूतये स्वाहा सं ज्योतिषा ज्योतिः ।
अहः केतुना जुषताꣳ सुज्योतिर्ज्योतिषा स्वाहा रात्रिः केतुना जुषताꣳ सुज्योतिर्ज्योतिषा स्वाहा ।
मधु हुतमिन्द्रतमे अग्ना अश्याम ते देव घर्म नमस्ते अस्तु मा मा हिꣳसीः ॥२॥ (३) १६

अभीमं महिमा दिवं विप्रो बभूव सप्रथाः ।
उत श्रवसा पृथिवीꣳ सꣳ सीदस्व महाँ२ असि रोचस्व देववीतमः ।
वि धूममग्ने अरुषं मियेध्य सृज प्रशस्त दर्शतम् ॥१॥ (४) १७

या ते घर्म दिव्या शुग्या गायत्र्याꣳ हविर्धाने । सा त आ प्यायतां निष्ट्यायतां तस्यै ते स्वाहा ।
या ते घर्मान्तरिक्षे शुग्या त्रिष्टुभ्याग्नीध्रे । सा त आ प्यायतां निष्ट्यायतां तस्यै ते स्वाहा ।
या ते घर्म पृथिव्याꣳ शुग्या जगत्याꣳ सदस्या ।
सा त आ प्यायतां निष्ट्यायतां तस्यै ते स्वाहा ॥१॥ १८
क्षत्रस्य त्वा परस्पाय ब्रह्मणस्तन्वं पाहि ।
विशस्त्वा धर्मणा वयमनु क्रामाम सुविताय नव्यसे ॥२॥ १९
चतुःस्रक्तिर्नाभिर्ऋतस्य सप्रथाः स नो विश्वायुः सप्रथाः स नः सर्वायुः सप्रथाः ।
अप द्वेषो अप ह्वरोऽन्यव्रतस्य सश्चिम ॥३॥ २० [१०४१]

घर्मैतत्ते पुरीषं तेन वर्धस्व चा च प्यायस्व ।
वर्धिषीमहि च वयमा च प्यासिषीमहि ॥४॥ २१
अचिक्रदद्वृषा हरिर्महान्मित्रो न दर्शतः । सꣳ सूर्येण दिद्युतदुदधिर्निधिः ॥५॥ २२
सुमित्रिया न आप ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु ।
योऽस्मान्द्वेष्टि यं च वयं द्विष्मः ॥६॥ २३
उद्वयं तमसस्परि स्वः पश्यन्त उत्तरम् । देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ।
एधोऽस्येधिषीमहि समिदसि तेजोऽसि तेजो मयि धेहि ॥७॥(५) २४

यावती द्यावापृथिवी यावच्च सप्त सिन्धवो वितस्थिरे ।
तावन्तमिन्द्र ते ग्रहमूर्जा गृह्णाम्यक्षितं मयि गृह्णाम्यक्षितम् ॥१॥ २५
मयि त्यदिन्द्रियं बृहन्मयि दक्षो मयि क्रतुः ।
घर्मस्त्रिशुग्वि राजति विराजा ज्योतिषा सह ब्रह्मणा तेजसा सह ॥
पयसो रेत आभृतं तस्य दोहमशीमह्युत्तरामुत्तराꣳ समाम् ॥२॥ (६) २६

त्विषः संवृक् क्रत्वे दक्षस्य ते सुषुम्णस्य ते सुषुम्णाग्निहुतः ।
इन्द्रपीतस्य प्रजापतिभक्षितस्य मधुमत उपहूत उपहूतस्य भक्षयामि ॥१॥ (७) २७ [२०५६]

देवस्य त्वा षट् ॥६॥ समुद्राय त्वाष्ट ॥८॥ स्वाहा पूष्णे द्वे ॥२॥ अर्माममेका ॥१॥ या ते सप्त ॥७॥
यावती द्वे ॥२॥ त्विषःसंवृगेका ॥१॥ सप्तानुवाकेषु सप्तविंशतिः ॥२७॥
इति शुक्लयजुःकाण्वसंहितायां अष्टत्रिंशोऽध्यायः ॥३८॥

## अथैकोनचत्वारिंशोऽध्यायः ।

स्वाहा प्राणेभ्यः साधिपतिकेभ्यः पृथिव्यै स्वाहाग्नये स्वाहान्तरिक्षाय स्वाहा वायवे स्वाहा
दिवे स्वाहा सूर्याय स्वाहा । दिग्भ्यः स्वाहा चन्द्राय स्वाहा नक्षत्रेभ्यः स्वाहाद्भ्यः
स्वाहा वरुणाय स्वाहा । नाभ्यै स्वाहा पूताय स्वाहा ॥१॥ (१) १

वाचे स्वाहा प्राणाय स्वाहा प्राणाय स्वाहा ।
चक्षुषे स्वाहा चक्षुषे स्वाहा श्रोत्राय स्वाहा श्रोत्राय स्वाहा ॥१॥ २
मनसः काममाकूतिं वाचः सत्यमशीय ।
पशूनाꣳ रूपमन्नस्य रसो यशः श्रीः श्रयतां मयि स्वाहा ॥२॥ (२) ३ [२०५९]

प्रजापतिः संभ्रियमाणः सम्राट् संभृतो वैश्वदेवः सꣳसन्नो घर्मः प्रवृक्तस्तेज उद्यत आश्विनः
पयस्यानीयमाने पूषा विष्यन्दमाने मारुतः क्वथन् ।
मैत्रः शरसि संताय्यमाने वायव्यो ह्रियमाण आग्नेयो हूयमानो वाग्घुतः ॥१॥ (३) ४

सविता प्रथमेऽहन्नग्निर्द्वितीये वायुस्तृतीय आदित्यश्चतुर्थे
चन्द्रमाः पञ्चम ऋतुः षष्ठे मरुतः सप्तमे बृहस्पतिरष्टमे ।
मित्रो नवमे वरुणो दशम इन्द्र एकादशे विश्वे देवा द्वादशे ॥१॥(४) ५

उग्रश्च भीमश्च ध्वान्तश्च धुनिश्च । सासह्वाꣳश्चाभियुग्वा च विक्षिपः स्वाहा ॥१॥ (५) ६

अग्निꣳ हृदयेनाशनिꣳ हृदयाग्रेण पशुपतिं कृत्स्नहृदयेन भवं यक्ना ।
शर्वं मतस्नाभ्यामीशानं मन्युना महादेवमन्तःपर्शव्येनोग्रं
देवं वनिष्ठुना वसिष्ठहनुः शिङ्गीनि कोश्याभ्याम् ॥१॥ (६) ७

उग्रँ लोहितेन मित्रꣳ सौव्रत्येन रुद्रं दौर्व्रत्येनेन्द्रं प्रक्रीडेन मरुतो बलेन साध्यान्प्रमुदा ।
भवस्य कण्ठ्यꣳ रुद्रस्यान्तःपार्श्व्यं महादेवस्य यकृच्छर्वस्य वनिष्ठुः पशुपतेः पुरीतत् ॥१॥ (७) ८

लोमभ्यः स्वाहा लोमभ्यः स्वाहा त्वचे स्वाहा त्वचे स्वाहा लोहिताय
स्वाहा लोहिताय स्वाहा मेदसे स्वाहा मेदसे स्वाहा ।
माꣳसेभ्यः स्वाहा माꣳसेभ्यः स्वाहा स्नावभ्यः स्वाहा
स्नावभ्यः स्वाहास्थभ्यः स्वाहास्थभ्यः स्वाहा मज्जभ्यः स्वाहा मज्जभ्यः स्वाहा ।
रेतसे स्वाहा पायवे स्वाहा ॥१॥ (८) ९

आयासाय स्वाहा प्रायासाय स्वाहा संयासाय स्वाहा वियासाय स्वाहोद्यासाय स्वाहा ।
शुचे स्वाहा शोचते स्वाहा शोकाय स्वाहा ॥१॥ १०
तपसे स्वाहा तप्यमानाय स्वाहा तप्ताय स्वाहा ।
निष्कृत्यै स्वाहा प्रायश्चित्यै स्वाहा भेषजाय स्वाहा ॥२॥ ११
यमाय स्वाहान्तकाय स्वाहा मृत्यवे स्वाहा ।
ब्रह्महत्यायै स्वाहा विश्वेभ्यो देवेभ्यः स्वाहा द्यावापृथिवीभ्याꣳ स्वाहा ॥३॥(९) १२ [२०६८]

स्वाहाप्राणेभ्य एका ॥१॥ वाचे द्वे ॥२॥ प्रजापतिःसम्भ्रियमाण एका ॥१॥ सविता प्रथम एका ॥१॥
उग्रश्चैका ॥१॥ अग्निꣳ हृदयेनैका ॥१॥ उग्रँल्लोहितेनैका ॥१॥ लोमभ्यः स्वाहा चेत्येका ॥१॥
आयासाय तिस्रः ॥३॥ नवानुवाकेषु द्वादश ॥१२॥

इति शुक्लयजुःकाण्वसंहितायां एकोनचत्वारिंशोऽध्यायः ॥३९॥

## अथ चत्वारिंशोऽध्यायः ।

ईशा वास्यमिदꣳ सर्वं यत्किं च जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनम् ॥१॥ १
कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः ।
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥२॥ २
असुर्या नाम ते लोका अन्धेन तमसावृताः ॥
ताꣳस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥३॥ ३
अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन्पूर्वमर्षत् ।
तद्धावतोऽन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति ॥४॥ ४
तदेजति तन्नैजति तद्दूरे तद्वन्तिके ।
तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः ॥५॥ ५
यस्तु सर्वाणि भूतान्यात्मन्नेवानुपश्यति ।
सर्वभूतेषु चात्मानं ततो न वि जुगुप्सते ॥६॥ ६
यस्मिन्त्सर्वाणि भूतान्यात्मैवाभूद्विजानतः ।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥७॥ ७
स पर्यगाच्छुक्रमकायमव्रणमस्नाविरꣳ शुद्धमपापविद्धम् ।
कविर्मनीषी परिभूः स्वयंभूर्याथातथ्यतोऽर्थान्व्यदधाच्छाश्वतीभ्यः समाभ्यः ॥८॥ ८
अन्धं तमः प्र विशन्ति येऽविद्यामुपासते ।
ततो भूय इव ते तमो य उ विद्यायाꣳ रताः ॥९॥ ९
अन्यदेवाहुर्विद्ययान्यदाहुरविद्यया ।
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥१०॥ १०
विद्यां चाविद्यां च यस्तद्वेदोभयꣳ सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते ॥११॥ ११
अन्धं तमः प्रविशन्ति येऽसंभूतिमुपासते ।
ततो भूय इव ते तमो य उ संभूत्याꣳ रताः ॥१२॥ १२
अन्यदेवाहुः संभवादन्यदाहुरसंभवात् ।
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥१३॥ १३ [१०८१]

संभूतिं च विनाशं च यस्तद्वेदोभयꣳ सह ।
विनाशेन मृत्युं तीर्त्वा सम्भूत्यामृतमश्नुते ॥१४॥ १४
हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।
तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ॥१५॥ १५
पूषन्नेक ऋषे यम सूर्य प्राजापत्य व्यूह रश्मीन्त्समूह
तेजो यत्ते रूपं कल्याणतमं तत्ते पश्यामि ।
योऽसावसौ पुरुषः सोऽहमस्मि ॥१६॥ १६
वायुरनिलममृतमथेदं भस्मान्तꣳ शरीरम् ।
ॐ३ क्रतो स्मर कृतꣳ स्मर क्रतो स्मर कृतꣳ स्मर ॥१७॥ १७
अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम ॥१८॥ (१) १८ [२०८६]

॥ ईशावास्यमित्येकानुवाके अष्टादश ॥१८॥

॥ इति शुक्लयजुःकाण्वसंहितायां चत्वारिंशोऽध्यायः ॥४०॥

॥ इति शुक्लयजुःकाण्वसंहिता समाप्ता ।

# शुक्ल-यजुर्वेद-मन्त्र-सूची।

( वाजसनेयीसंहितायाः काण्वसंहितायाश्च )

| मन्त्राः | वाजसनेयीयजुर्वेदे अध्यायः, मंत्रः | काण्वयजुर्वेदे अध्यायः, मंत्रः |
|---|---|---|
| अꣳशुना ते | २०, २७ | २२, १२ |
| अꣳशुरꣳशुष्टे देव | ५, ७ | ५, ९ |
| अꣳशुश्च मे रश्मिश्च | १८, १९ | १९, ३१ |
| अकर्न्कर्म कर्मकृतः | ३, ४७ | ३, ५५ |
| अक्रन्ददग्नि स्तनयन् | १२, ६ | १३, ७ |
| | १२, २१ | १३, २२ |
| | १२, ३३ | १३, ३४ |
| अक्षन्नमीमदन्त | ३, ५१ | ३, ५९ |
| अक्षन्पितरोऽमी | १९, ३६ | २१, ३७ |
| अक्षरपङ्क्तिश्छन्दः | १५, ५ | १६, ६ |
| अक्षराजाय कितवं | ३०, १८ | ३४, १८ |
| अगन्म ज्योतिरमृता | ८, ५२ | ९, ३५ |
| अग्न आयूꣳषि | १९, ३८ | ८, १९ |
| | ३५, १६ | २१, ४० |
| | | २९, ३७ |
| | | ३५, ४८ |
| अग्न इन्द्र वरुण | ३३, ४८ | ३२, ४८ |
| अग्नये कव्यवाहनाय | २, २९ | २, ५४ |
| अग्नये कुटरुनालभते | २४, २३ | २६, २७ |
| अग्नये गायत्राय | २९, ६० | ३१, ४९ |
| अग्नये गृहपतये | १०, २३ | ११, २३ |
| अग्नये जुष्टं गृह्णामि | १, १० | १, १४ |
| अग्नये त्वा मह्यं | ७, ४७ | ९, १२ |
| अग्नयेऽनीकवते | २४, १६ | २६, २० |
| | २९, ५९ | ३१, ५१ |
| अग्नये पीवानम् | ३०, २१ | ३४, २१ |
| अग्नये समवेशयान्नये | २, २० | २, ३७ |
| अग्नये स्वाहा सोमाय | २२, ६ | २४, ६ |
| | २२, २७ | २४, ३७ |
| अग्नाꣳइ पत्नीवन्त्सजूर्देवेन | ८, १० | ८, १० |
| अग्नाव (अ) ग्निश्चरति | ५, ४ | ५, ४ |
| अग्निं तं मन्ये | १५, ४१ | १६, ६३ |
| अग्निं दूतं पुरो दधे | २२, १७ | २४, २२ |
| अग्निं युनज्मि शवसा | १८, ५१ | २०, २१ |
| अग्निꣳस्तोमेन बोधय | २२, १५ | २४, १९ |
| अग्निꣳहृदयेनाशनिꣳ | ३९, ८ | ३९, ७ |
| अग्निꣳहोतारं मन्ये | १५, ४७ | १६, ६९ |
| अग्निः पशुरासीत् | २३, १७ | २५, १९ |
| अग्निः पृथुर्धर्मणस्पतिः | १०, २९ | ११, ४१ |
| अग्निः प्रियेषु धामसु | १२, ११७ | १३, ११६ |
| अग्निमद्य होतारम् | २१, ५९ | २३, ५८ |
| | २८, २३ | ३०, २३ |
| | २८, ४६ | ३०, ४६ |
| अग्निरस्मि जन्मना | १८, ६६ | |
| अग्निराग्नीध्र इन्द्रो | ८, ५६ | ९, ४१ |
| अग्निरेकाक्षरेण | ९, ३१ | १०, ४० |
| अग्निर्ऋषिः पवमानः | २६, ९ | २८, १२ |
| | | २९, ३९ |
| अग्निर्ज्योतिर्ज्योतिरग्निः | ३, ९ | |
| अग्निर्ज्योतिषं त्वा वायु | | ३, ९ |
| | | ३, १० |
| अग्निर्ज्योतिषा ज्योतिष्मान् | १३, ४० | १४, ४२ |
| अग्निर्देवता वातो | १४, २० | १५, २२ |
| अग्निर्मूर्धा दिवः | ३, १२ | ३, १८ |
| | १३, १४ | १६, ४१ |
| | १५, २० | |
| अग्निर्वृत्राणि जङ्घनत् | ३३, ९ | ३२, ९ |
| अग्निश्च पृथिवी च | २६, १ | २८, १ |
| अग्निश्च म आपश्च | १८, १४ | १९, २६ |
| अग्निश्च म इन्द्रश्च | १८, १६ | १९, २८ |
| अग्निश्च मे घर्मश्च | १८, २२ | १९, ३४ |
| अग्निष्वात्ताः पितर | १९, ५९ | २१, ५८ |
| अग्निष्वात्तानृतुमतो | १९, ६१ | २१, ६१ |
| अग्निष्टे त्वचं मा | १, २२ | १, २८ |
| अग्निस्तिग्मेन शोचिषा | १७, १६ | १८, १६ |

| | | |
|---|---|---|
| ईड्यश्चासि वन्द्यश्च | २९, ३ | ३१, ३ |
| ईदृक्षास एतादृक्षास | १७, ८४ | १८, ८४ |
| ईदृङ् चान्यादृङ् च | १७, ८१ | १८, ८१ |
| ईर्मान्तासः शि ( सि ) लिक | २९, २१ | ३१, ३३ |
| ईशानाय परस्वत | २४, २८ | २६, ३२ |
| ईशा वास्यमिदꣳ सर्वं | ४०, १ | ४०, १ |
| उत्राः सहरा एताः | २४, १५ | २६, १९ |
| | २४, १७ | २६, २१ |
| | २४, १९ | २६, २३ |
| उक्थेभिर्वृत्रहन्तमा | ३३, ७६ | ३२, ७६ |
| उक्षा समुद्रो अरुणः | १७, ६० | १८, ६० |
| उखां कृणोतु शक्त्या | ११, ५७ | १२, ५८ |
| उग्रँल्लोहितेन मित्रꣳ | ३९, ९ | ३९, ८ |
| उग्रश्च भीमश्च ध्वान्तश्च | ३९, ७ | ३९, ६ |
| उग्रा विघनिना मृध | ३३, ६१ | ३२, ६१ |
| उच्चा ते जातमन्धसो | २६, १६ | |
| उच्छुष्मा ओषधीनां | १२, ८२ | १३. ८३ |
| उच्छ्रयस्व वनस्पत | ४, १० | ४, १३ |
| उत नोऽहिर्बुध्न्यः | ३४, ५३ | ३३, ४१ |
| उत स्मास्य द्रवतस्तु | ९, १५ | १०, २१ |
| उत्तानायामव भरा | ३४, १४ | ३३, ८ |
| उत्तिष्ठ ब्रह्मणस्पते | ३४, ५६ | ३३, ४४ |
| उत्तिष्ठन्नोजसा सह | ८, ३९ | ८, २१ |
| उतेदानीं भगवन्तः | ३४, ३७ | |
| उत्क्राम महते सौभगाय | ११, २१ | १२, २१ |
| उत्थाय बृहती | ११, ६४ | १२, ६६ |
| उत्प्रुषो विप्रुषः सं | | २, ३८ |
| उत्सक्थ्या अव गुदं | २३, २१ | २५, २३ |
| उत्सादेभ्यः कुब्जं | ३०, १० | ३४, १० |
| उदक्रमीद्द्रविणोदा | ११, २२ | १२, २२ |
| उदग्ने तिष्ठ-प्रत्या | १३, १२ | १४, -१२ |
| उदायुषा स्वायुषो | ४, २८ | २, ५८ |
| उदिवꣳ स्तभानान्तरिक्षं | ५, २७ | |
| उदीचीमारोह | १०, १३ | ११, २१ |
| उदीरतामवर | १९, ४९ | २१, ५१ |
| उदु तिष्ठ स्वध्वराव | ११, ४१ | १२, ४१ |
| उदुत्तमं वरुण पाश | १२, १२ | १३, १३ |
| उदु त्यं जातवेदसं | ७, ४१ | ८, ४३ |
| | ८, ४१ | ९, ६ |
| | ३३, ३१ | ३२, ३१ |
| उदु त्वा विश्वे देवा | १२, ३१ | १३, ३२ |
| | १७, ५३ | १८, ५३ |
| उदेनमुत्तरां नयाग्ने | १७, ५० | १८, ५० |
| उदेषां बाहू | ११, ८२ | १२, ८३ |
| उद्ग्राभं च निग्राभं च | १७, ६४ | १८, ६४ |
| उद्धर्षय मघवन् | १७, ४२ | १८, ४२ |
| उद्बुध्यस्वाग्ने प्रति | १५, ५४ | १६, ७६ |
| | १८, ६१ | २०, ३१ |
| उद्वयन्तमसस्परि | २०, २१ | २२, ६ |
| | २७, १० | २९, १० |
| | ३५, १४ | ३५, ४७ |
| | ३८, २४ | ३८, २४ |
| उन्नत ऋषभो | २४, ७ | २६, ११ |
| उप ज्मन्नुप वेतसे | १७, ६ | १८, ७ |
| उप त्वाग्ने दिवेदिवे | ३, २२ | ३, ३० |
| उप त्वाग्ने हविष्मतीः | ३, ४ | ३, ४ |
| उप नः सूनवो गिरः | ३३, ७७ | ३२, ७७ |
| उपप्रयन्तो अध्वरं | ३, ११ | ३, १७ |
| उप प्रागाच्छसनं | २९, २३ | ३१, ३५ |
| उप प्रागात्परमं | २९, २४ | ३१, ३६ |
| उप प्रागात्सुमन्मे | २५, ३० | २७, ३४ |
| उपयामगृहीतोऽसि ध्रुवो | ७, २५ | ७, २७ |
| उपयामगृहीतोऽसि प्रजापतये | २३, २ | २५, २ |
| | २३, ४ | २५, ४ |
| उपयामगृहीतोऽसि बृहस्पति | ८, ९ | ८, ८ |
| उपयामगृहीतोऽसि मधवे | ७, ३० | ७, ३० |
| उपयामगृहीतोऽसि मरुतां | ७, ३६ | ७, ३७ |
| उपयामगृहीतोऽसि सावित्रो- | ८, ७ | ८, ६ |
| उपयामगृहीतोऽ सीन्द्राय | ७, २२ | ७, २४ |
| उपयामगृहीतोऽसि सुशर्मा. | ८, ८ | ८, ७ |
| उपयामगृहीतोऽस्यग्नये | ८, ४७ | ८, २९ |
| उपयामगृहीतोऽस्यन्त | ७, ४ | ७, ४ |
| उपयामगृहीतोऽस्यश्विभ्यां | २०, ३३ | २२, १८ |
| उपयामगृहीतोऽस्याग्र | ७, २० | ७, २१ |
| उपयामगृहीतोऽस्यादित्ये | ८, १ | ३, ५० |
| उपयामगृहीतोऽस्याश्विनं | १९, ८ | २१, ७ |
| उपयामगृहीतोऽसि हरिरसि | ८, ११ | ८, १२ |
| उप श्वासय पृथिवी | २९, ५५ | ३१, २३ |
| उपहूता इह गाव | ३, ४३ | ३, ५० |
| उपहूताः पितरः | १९, ५७ | २१, ५६ |

| | | |
|---|---|---|
| जं.मूतस्येव भवति | २९, ३८ | ३१, १३ |
| जुष.णो व.र्हिर्हरिव.न्न | २०, ३९ | २२, २४ |
| ज्यैष्ठ्यं च म अ धिपत्यं | १८, ४ | १९, १६ |
| ज्योतिरासि विश्वरूपं | ५, ३५ | ५, ४४ |
| तं यज्ञं बर्हिषि | ३१, ९ | ३५, ९ |
| तं वो दस्ममृतीषहं | २६, ११ | |
| त आयजन्त द्रविणं | १७, २८ | १८, २८ |
| तच्चक्षुर्देवहितं | ३६, २४ | ३६. २४ |
| ततो विराड (ळ) जायत | ३१, ५ | ३५ ५ |
| ततोऽसि तन्तुरत्यनु | | २, ५२ |
| तत्वा यामि ब्रह्मणा | १८, ४९ | २०, १९ |
| | २१, २ | २३, २ |
| तत्सवितुर्वरेण्यं | ३, ३५ | ३, ४३ |
| | २२, ९ | २४, १३ |
| | ३०, २ | ३४, २ |
| तत्सूर्यस्य देवत्वं | ३३, ३७ | ३२, ३७ |
| तदश्विना भिषजा | १९, ८२ | २१, ७९ |
| तदस्य रूपममृतं | १९, ८१ | २१, ७८ |
| तदिदास भुवनेषु | ३२, ८० | ३२, ८० |
| तदेजति तन्नैजति | ४०, ५ | ४०, ५ |
| तदेवाग्निस्तदादित्यः | ३२, १ | ३५, २३ |
| तद्विप्रासो विपन्यवो | ३४, ४४ | ३३, ३२ |
| तद्विष्णोः परमं पदं | ६, ५ | ६, ६ |
| तनूनपाच्छुचिव्रत | २१, १३ | २३, १४ |
| तनूनपात्पथ ऋतस्य | २९, २६ | ३१, ३८ |
| तनूनपादसुरो | २७, १२ | २९. १२ |
| तनूपा अग्नेऽसि तन्वं | ३, १७ | ३, २३ |
| तनूपा भिषजा सुते | २०, ५६ | २२, ४१ |
| तं त एनमनु जोषं | २, १७ | २, ३४ |
| तन्तुना रायस्पोषेण | १५, ७ | १६, ११ |
| तं त्वा घृतस्न ईमहे | | २४, २१ |
| तं त्वा जुषामहे | ५ ४२ | ५, ५३ |
| तं त्वा शोचिष्ठ दीदिवः | ३, २६ | ३, ३४ |
| तं त्वा समिद्भिरङ्गिरो | ३, ३ | ३, ३ |
| तं देवेभ्यो देवत्रा | ६, २७ | ६, ४० |
| तन्नस्तुरीपमद्भुतं | २७, २० | २९, २० |
| तन्नो वातो मयोभु | २५, १७ | २७, २१ |
| तन्मित्रस्य वरुणस्या | ३३, ३८ | ३२, ३८ |
| तपश्च तपस्यश्च | १५, ५७ | १६, ७९ |
| तपसस्तनूरसि | ४, २६ | ४, ३७ |

| | | |
|---|---|---|
| तपसे कौलालं | ३०, ७ | ३४, ७ |
| तपसे स्वाहा तप्यमा | ३९, १२ | ३९, ११ |
| तप्तायनी मेऽसि | ५, ९ | ५, १३ |
| तमिद्गर्भं प्रथमं | १७, ३० | १८, ३० |
| तमिन्द्रं पशवः सचा | २०, ६९ | २२, ५४ |
| तमीशानं जगतस्तस्थु | २५, १८ | २७, २२ |
| तमु त्वा दध्यङ्ङृषिः | ११, ३३ | १२, ३३ |
| तमु त्वा पाथ्यो वृषा | ११, ३४ | १२, ३४ |
| तं पत्नीभिरनुगच्छेम | १५, ५० | १६, ७२ |
| तं प्रत्नया पूर्वया | ७, १२ | ७, ११ |
| तरणिर्विश्वदर्शतो | ३३, ३६ | ३२, ३६ |
| तव भ्रमास आशुया | १३, १० | १४, १० |
| तव वायवृ(ऋ)तस्पते | २७, ३४ | २९, ३२ |
| तव शरीरं पतयिष्णु | २९, २२ | ३१, ३४ |
| तवायं सोमः | २६, २३ | |
| तस्य ऽअरं गमाम | ११, ५२ | १२, ५३ |
| | ३६, १६ | ३६, १६ |
| तस्मादश्वा अजायन्त | ३१, ८ | ३५, ८ |
| तस्माद्यज्ञात्सर्वहुत | ३१, ७ | ३५, ७ |
| तस्माद्यज्ञात्सर्वहुतः | ३१, ६ | ३५, ६ |
| तस्य वयं सुमतौ | २०, ५२ | २२, ३७ |
| तस्यास्ते सत्यसवसः | ४, १८ | ४, २४ |
| तां सवितुर्वरेण्यस्य | १७, ७४ | १८. ७४ |
| ता अस्य सूददोहसः | १२, ५५ | १३, ५६ |
| | १५, ६० | १६, ८१ |
| ता उभौ चतुरः पदः | २३, २० | २५, २२ |
| ता न आ वोढ (ळ्ह) मश्विना | २०, ८३ | २२, ६८ |
| ता नासत्या सुपेशसा | २०, ७४ | २२, ५९ |
| तान्पूर्वया निविदा | २५, १६ | २७, २० |
| ता भिषजा सुकर्मणा | २०, ७५ | २२, ६० |
| तिरश्चीनो विततो | ३३, ७४ | ३२, ७४ |
| तिस्र इडा (ळा) सरस्वती | २१, १९ | २३, २० |
| तिस्रस्त्रेधा सरस्वत्यश्विना | २०, ६३ | २२, ४८ |
| तिस्रो देवीर्बर्हिरेदं | २७, १९ | २९, १९ |
| तिस्रो देवीर्हविषा | २०, ४३ | २२, २८ |
| तीव्रान्घोषान्कृण्वते | २९, ४४ | |
| तुभ्यं ता अङ्गिरस्तम | १२, ११६ | १३, ११५ |
| ते अस्य योषणे दिव्ये | २७, १७ | २९, १७ |
| ते आचरन्ती समनेव | २९, ४१ | ३१, १५ |
| तेजः पशूनां | १९, ९५ | २१, ९१ |

| | | |
|---|---|---|
| पृश्निस्तिरश्चीनपृश्निः | २४, ४ | २६, ६ |
| पृषदश्वा मरुतः | २५, २० | २७, २४ |
| पृष्ठो दिवि पृष्ठो | १८, ७३ | २०, ४२ |
| पृष्ठीर्मे राष्ट्रमुदरम॑ सौ | २०, ८ | २१, ९९ |
| प्रघासिनो हवामहे | ३, ४४ | ३, ५२ |
| प्रजापतये च वायवे | २४, ३० | २६, ३४ |
| प्रजापतये त्वा जुष्टं | २२, ५ | २४, ४ |
| प्रजापतये पुरुषान् | २४, २९ | २६, ३३ |
| प्रजापतये ब्रह्मनश्वं | २२, ४ | २४, ४ |
| प्रजापतिः सम्भ्रियमाणः | ३९, ५ | ३९, ४ |
| प्रजापतिर्विश्वकर्मा | १८, ४३ | २०, १३ |
| प्रजापतिर्वृषासि | ८, १० | ८, ११ |
| प्रजापतिश्चरति गर्भे | ३१, १९ | ३५, १९ |
| प्रजापतिष्ट्वा सादयतु | १३, १७ | १४, १७ |
| प्रजापते न त्वदेता | १०, २० | ११, २९ |
| | २३, ६५ | २५, ६७ |
| प्रजापतेस्तपसा | २९, ११ | ३१, ११ |
| प्रजापतौ त्वा देवता | ३५, ६ | ३५, ३९ |
| प्रजाभ्यस्त्वा प्रजास्त्वानु | ४, २५ | ४, ३५ |
| प्र तद्विष्णुस्तवते | ५, २० | ५, २६ |
| प्र तद्वोचेदमृतं | ३२, ९ | ३५, २८ |
| प्रति क्षत्रे प्रति तिष्ठामि | २०, १० | २१, १०१ |
| प्रतिपदसि प्रतिपदे | १५, ८ | १६, १३ |
| प्रति पन्थामपद्महि | ४, २९ | ४, ४१ |
| प्रतिश्रुत्काया अर्तनं | ३०, १९ | ३४, १९ |
| प्रति स्पशो विसृज | १३, ११ | १४, ११ |
| प्रतिधिना पृथिव्या | १५, ६ | १६, १० |
| प्रतीचीमारोह | १०, १२ | ११, २० |
| प्रतूर्त्त वाजिन्नाद्रव | ११, १२ | १२, १२ |
| प्रतूर्वन्नेह्यवक्राम | ११, १५ | १२, १५ |
| प्रत्यग्नेषु प्रति | २०, १० | २१, १०२ |
| प्रत्युष्ट॑ रक्षः | १, ७ | १, १० |
| | १, २९ | १, ४६ |
| प्रथमा द्वितीयैः | २०, १२ | २१, १०४ |
| प्रथमा वा॑ सरथिना | २९, ७ | ३१, ७ |
| प्र नूनं ब्रह्मणस्पतिः | ३४, ५७ | ३३, ४५ |
| प्र नो यच्छत्वर्यमा | ९, २९ | १०, ३७ |
| प्र पर्वतस्य वृषभस्य | १०, १९ | ११, २८ |
| प्र-प्रायमग्निर्भरतस्य | १२, ३४ | १३, ३५ |
| प्र बाहवा सिसृतं | २१, ९ | २३, ९ |
| प्र मन्महे शवसा | ३४, १६ | ३३, १० |
| प्रमुञ्च धन्वनस्त्व | १६, ९ | १७, ९ |
| प्र याभिर्यासि दाश्वा॑ | २७, २७ | २९, २६ |
| प्र व इन्द्राय बृहते | ३३, ९६ | |
| प्र वायुमच्छा बृहती | ३३, ५५ | ३२, ५५ |
| प्र वावृजे सुप्रया | ३३, ४४ | ३२, ४४ |
| प्र वीरया शुचयो | ३३, ७० | ३२, ७० |
| प्र वो महे मन्दमानाय | ३३, २३ | ३२, २३ |
| प्र वो महे महि नमो | ३४, १७ | ३३, ११ |
| प्रसद्य भस्मना योनिमपश्च | १२, ३८ | १३, ३९ |
| प्रस्तरेण परिधिना | १८, ६३ | २०, ३३ |
| प्रागपागुदगधराक् | ६, ३६ | ६, ४९ |
| प्राचीनं बर्हिः प्रदिशा | २९, २९ | ३१, ४१ |
| प्राचीमनु प्रदिशं प्रेहि | १७, ६६ | १८, ६६ |
| प्राच्यै दिशे स्वाहार्वाच्यै | २२, २४ | २४, ३४ |
| प्राणं मे पाह्यपानं मे | १४, ८ | १५, ७ |
| प्राणदा अपानदा | १७, १५ | १८, १५ |
| प्राणपा मे अपानपाः | २०, ३४ | २२, १९ |
| प्राणश्च मेऽपानश्च | १८, २ | १९, १४ |
| प्राणापानौ मे पाहि | | २, २६ |
| प्राणाय त्वोदानाय | १, २० | १, ३४ |
| प्राणाय मे वर्चोदा | ७, २७ | ९, १ |
| प्राणाय स्वाहापानाय | २२, २३ | २४, ३३ |
| | २३, १८ | २५, २० |
| प्रातरग्निं प्रातरिन्द्र॑ | ३४, ३४ | |
| प्रातर्जितं भगमुग्र॑ | ३४, ३५ | ३३, २८ |
| प्रियंकर [बहुकार] श्रेयस्कर | १०, २८ | ११, ४० |
| प्रेता जयता नर इन्द्रो | १७, ४६ | १८, ४६ |
| प्रैत्या एत्यै सं चाम्य | २७, ४५ | २९, ५० |
| प्रेदग्ने ज्योतिष्मान् | १२, ३२ | १३, ३३ |
| प्रेद्धो अग्ने दीदिहि | १७, ७६ | १८, ७६ |
| प्रैतु ब्रह्मणस्पतिः | ३३, ८९ | ३७, ७ |
| | ३७, ७ | |
| प्रैतु वाजीकनिक्रदन् | ११, ४६ | १२, ४६ |
| प्रैषेभिः प्रैषानाप्नोति | १९, १९ | २१, १९ |
| प्रोथदश्वो न यवसे | १५, ६२ | १६, ८३ |
| प्रोह्यमाणः सोम आगतो | ८, ५६ | ९, ४० |
| फल्गूर्लोहितोर्णी पलक्षी | २४, ४ | २६, ७ |
| बट् सूर्य श्रवसा | ३३, ४० | ३२, ४० |
| बण्महाँ २ असि | ३३, ३९ | ३२, ३९ |

# शुक्लयजुर्वेदान्तर्गतानामृग्वेदमन्त्राणां मण्डलानुक्रमेण

# सूची।

## प्रथमं मण्डलम्।

| सूक्ते मंत्रः | मन्त्रः | वाजसनेयी यजुर्वेदे अ० मं० | काण्वयजुर्वेदे अ० मं० | ऋषिः |
|---|---|---|---|---|
| १। ७ | उप त्वाग्ने दिवे | ३,२२ | ३,३० | मधुच्छन्दा |
| ८ | राजन्तम | २३ | ३१ | |
| ९ | स नः पितेव | २४ | ३२ | |
| २। ४ | इन्द्रवायू | ७, ८ | ७, ७ | |
| | | ३३,५६ | ३२,५६ | |
| ७ | मित्रं हुवे | ५७ | ५७ | |
| ३। ३ | दस्रा युवा | ५८ | ५८ | |
| ४ | इन्द्रा याहि चित्र | २०,८७ | २१,७२ | |
| ५ | ,, ,, धियै | ८८ | ७३ | |
| ६ | ,, ,, तूतु | ८९ | ७४ | |
| ७ | ओमासश्च | ७,३३ | ७,३३ | |
| १० | पावका नः | २०,८४ | २१,६९ | |
| ११ | चोदयित्री | ८५ | ७० | |
| १२ | महो अर्णः | ८६ | ७१ | |
| ६। १ | युञ्जन्ति | २३, ५ | २५, ५ | |
| २ | युञ्जन्त्यस्य | ६ | ६ | |
| ३ | केतुं कृण्व | २९,३७ | ३१,११ | |
| ९। १ | इन्द्रेहि मत्स्य | ३३,२५ | ३२,२५ | |
| १०। ३ | युक्ष्वा हि | ८,३४ | ८,१४ | |
| १२ | परि त्वा गिर्वणो | ५,२९ | ५,३७ | |
| ११। १ | इन्द्रं विश्वा | १२,५६ | १३,५७ | जेता |
| | | १५,६१ | १६,८२ | |
| | | १७,६१ | १८,६१ | |
| १२।१० | स नः पावक | १७, ९ | १८,१० | मेधातिथिः |
| १४। ३ | इन्द्रवायू बृहस्पतिं | ३३,४५ | ३२,४५ | |
| १० | विश्वेभिः सोम्यं | १० | १० | |
| १५। ३ | अभि यज्ञं | २६,२१ | × | |
| ९ | द्रविणोदाः | २२ | × | |
| १८। १ | सोमानं स्वरणं | ३,२८ | ३,३६ | मेधातिथिः |
| २ | यो रेवान्यो | २९ | ३७ | |
| ३ | मा नः शंसो | ३० | ३८ | |
| ६ | सदसस्पति | ३२,१३ | ३५,३२ | |
| २२। ३ | या वां कशा | ७,११ | ७,१० | |
| ५ | हिरण्यपाणिमूतये | २२,१० | २४,१४ | |
| ७ | विभक्तारं | ३०, ४ | ३४, ४ | |
| ९ | अग्ने पत्नी | २६,२० | × | |
| १३ | मही द्यौः | ८,३२ | ९,३१ | |
| | | १३,३२ | १४,३४ | |
| १५ | स्योना पृथिवि | ३५,२१ | ३५,५४ | |
| | | ३६,१३ | ३६,१३ | |
| १७ | इदं विष्णु | ५,१५ | ५,२० | |
| १८ | त्रीणि पदा | ३४,४३ | ३३,३१ | |
| १९ | विष्णोः कर्माणि | ६, ४ | ६, ५ | |
| | | १३,३३ | १४,३५ | |
| २० | तद्विष्णोः परमं | ६, ५ | ६, ६ | |
| २१ | तद्विप्रासो | ३४,४४ | ३३,३२ | |
| २३। ६ | वरुणः प्राविता | ३३,४६ | ३२,४६ | |
| १७ | अमूर्या उप | ६,२४ | ६,३५ | |
| १९ | अप्स्वन्तर | ९, ६ | १०, ९ | |
| २१ | ज्योक्च सूर्यं दृशे | ३,५४ | ३,६२ | |
| २२ | इदमापः | ६,१७ | ६,३२ | |
| २३ | आपो अद्या | २०,२२ | २२, ७ | |
| २४। ८ | उरुं हि राजा | ८,२३ (पा.२।३) | ९,२३ | शुनःशेपः |
| ११ | तत्त्वा यामि | १८,४९ | २०,१९ | |
| | | २१, २ | २३, २ | |
| १५ | उदुत्तमं | १२,१२ | १३,१३ | |

| सू० मं० | मन्त्रः | वा० य० | का० य० | ऋषिः |
|---|---|---|---|---|
| २५।१० | नि षसाद | १०,२७ | ११,३७ | शुनःशेपः |
| | | २०, २ | २१,९३ | |
| ११ | प्र ण आयूंषि | २३,३२ (पा.४) | २५,३४ | |
| १९ | इमं मे वरुण | २१, १ | २३, १ | |
| २७। ७ | यमग्ने पृत्सु | ६,२९ | ६,४१ | |
| ३०। ७ | योगेयोगे | ११,१४ | १२,१४ | |
| ३१। १ | त्वमग्ने प्रथमो | ३४,१२ | ३३, ६ | हिरण्यस्तूपः |
| १२ | त्वं नो अग्ने | १३ | ७ | |
| ३४।११ | आ नासत्या | ४७ | ३५ | |
| ३५। २ | आ कृष्णेन | ३३,४३ | ३२,४३ | |
| | | ३४,३१ | ३३,२५ | |
| ८ | अष्टौ व्यख्यत् | २४ | १८ | |
| ९ | हिरण्यपाणिः | २५ | १९ | |
| १० | हिरण्यहस्तो | २६ | २० | |
| ११ | ये ते पन्थाः | २७ | २१ | |
| ३६। ९ | सं सीदस्व | ११,३७ | १२,३७ | कण्वः |
| १३ | ऊर्ध्व ऊ षु | ४२ | ४२ | |
| ४०। १ | उत्तिष्ठ ब्रह्म | ३४,५६ | ३३,४४ | |
| ३ | प्रैतु ब्रह्मण | ३३,८९ | | |
| | | ३७, ७ | ३७, ७ | |
| ५ | प्र नूनं ब्रह्म | ३४,५७ | ३३,४५ | |
| ४४।१३ | श्रुधि श्रुत्कर्ण | ३३,१५ | ३२,१५ | प्रस्कण्वः |
| ४५। ६ | त्वां चित्रश्रव | १५,३१ | १६,५३ | |
| ४६।१५ | उभा पिबत | ३४,२८ | ३३,२२ | |
| ४७। १ | सुतःसोम ऋतावृधा | ७, ९ | ७, ८ | |
| ५०। १ | उदु त्यं जात | ७,४१ | ८,२३ | |
| | | ८,४१ | ९, ६ | |
| | | ३३,३१ | ३२,३१ | |
| ३ | अदृश्रमस्य | ८,४० | ८,२२ | |
| ४ | तरणिर्विश्व | ३३,३६ | ३२,३६ | |
| ६ | येना पावक | ३२ | ३२ | |
| १० | उद्वयं तमस | २०,२१ | २२, ६ | |
| | | २७,१० | २९,१० | |
| | | ३५,१४ | ३५,४७ | |
| | | ३८,२४ | ३८,२४ | |
| ६१। १ | प्र मन्महे | ३४,१६ | ३३,१० | नोधा |
| २ | प्र वो महे | १७ | ११ | |
| ७१। ८ | आ यद्दिषे | ३३,११ | ३२,११ | पराशरः |

| सू० मं० | मन्त्रः | वा० य० | का० य० | ऋषिः |
|---|---|---|---|---|
| ७४। १ | उपप्रयन्तो | ३,११ | ३,१७ | गोतमः |
| ७५। ५ | यजा नो मित्रा | ३३, ३ | ३२, ३ | |
| ७९। ४ | अग्ने वाजस्य | १५,३५ | १६,५७ | |
| ५ | स इधानो | ३६ | ५८ | |
| ६ | क्षपो राजन् | ३७ | ५९ | |
| ८१। २ | अक्षन्नमी | ३,५१ | ३,५९ | |
| ३ | सुसंदृशं | ५२ | ६० | |
| ८४। २ | इन्द्रमिद्धरी | ८,३५ | ८,१६ | |
| ३ | आ तिष्ठ वृत्र | ३३ | १५ | |
| १९ | त्वमङ्ग प्र | ६,३७ | ६,५० | |
| ८६। १ | मरुतो यस्य | ८,३१ | ९,३० | |
| ८९। १ | आ नो भद्राः | २५,१४ | २७,१८ | |
| २ | देवानां भद्रा | १५ | १९ | |
| ३ | तान्पूर्वया | १६ | २० | |
| ४ | तन्नो वातो | १७ | २१ | |
| ५ | तमीशानं | १८ | २२ | |
| ६ | स्वस्ति न इन्द्रो | १९ | २३ | |
| ७ | पृषदश्वा | २० | २४ | |
| ८ | भद्रं कर्णेभिः | २१ | २५ | |
| ९ | शतमिन्नु | २२ | २६ | |
| १० | अदितिर्द्यौ | २३ | २७ | |
| ९०। ६ | मधु वाता | १३,२७ | १४,२९ | |
| ७ | मधुनक्त | २८ | ३० | |
| ८ | मधुमान्नो | २९ | ३१ | |
| ९ | शं नो मित्रः | ३६, ९ | ३६, ९ | |
| ९१। १ | त्वं सोम प्र | १९,५२ | २१,५२ | |
| १६ | आ प्यायस्व | १२,११२ | १३,१११ | |
| १७ | आ प्यायस्व मदि | ११४ | ११३ | |
| १८ | सं ते पयांसि | ११३ | ११२ | |
| १९ | या ते धामानि हवि | ४,३७ | ४,४९ | |
| २० | सोमो धेनुं | ३४,२१ | ३३,१५ | |
| २१ | अषाळ्हं युत्सु | २० | १४ | |
| २२ | त्वमिमा | २२ | १६ | |
| २३ | देवेन नो | २३ | १७ | |
| ९२। ६ | तमस्पारमस्य | १२,७३ | १३,७४ | |
| १३ | उषस्तच्चित्र | ३४,३३ | ३३,२७ | |
| ९४।१६ | तन्नो मित्रो | ३४,३० (पा. ३।४) | ३३,२४ | कुत्सः |
| | | ३३,४२ ( ,, ) | ३२,४२ | |

| सू० मं० | मन्त्रः | वा० य० | का० य० | ऋषिः |
|---|---|---|---|---|
| ९५। १ | द्वे विरूपे | ३३, ५ | ३२, ५ | कुत्सः |
| ९६। ५ | नक्तोषासा | १२, २ | १३, २ | |
| | | १७,७० | १८,७० | |
| ९७।१-८ | अप नः शोशुचद् | ३५,६,२१ | ३५,५४ | |
| ९८। १ | वैश्वानरस्य | २६, ७ | २८, ९ | |
| २ | पृष्टो दिवि | १८,७३ | २०,६२ | |
| ९८। ३ | अस्मानायो | २,१० | २,१८ | |
| १०२।१ | इमां ते धियं | ३३,२९ | ३२,२९ | |
| १०५।१ | चन्द्रमा अप्स्व | ९० | × | त्रितः वा |
| १०७।१ | यज्ञो देवानां | ८, ४ | ८, ३ | कुत्सः |
| | | ३३,६८ | ३२,६८ | |
| ११२।२४ | अप्नस्वती | ३४,२९ | ३३,२३ | |
| २५ | द्युभिरक्तुभिः | ३४,३० | ३३,२४ | |
| ११४।१ | इमा रुद्राय | १६,४८ | १७,४८ | |
| ७ | मा नो महान्त | १५ | १५ | |
| ८ | मा नस्तोके | १६ | १६ | |
| ११५।१ | चित्रं देवाना | ७,४२ | ८,२४.९,७ | |
| | | १३,४६ | १४,४८ | |
| ४ | तत्सूर्यस्य | ३३,३७ | ३२,३७ | |
| ५ | तन्मित्रस्य | ३८ | ३८ | |
| ६ | अद्या देवा | ४२ | ४२ | |
| १२७।१ | अग्निं होतारं | १५,४७ | १६,६९ | परुच्छेपः |
| १३२।६ | ·दूरे चत्ताय | ८,५३ | ९,३६ | |
| १४२।१० | तन्नस्तुरी | २७,२० | २९,२० | दीर्घतमाः |
| १४७।२ | बोधा मे अस्य | १२,४२ | १३,४३ | |
| १५४।१ | विष्णोर्नु कं | ५,१८ | ५,२४ | |
| २ | प्र तद्विष्णुः | २० | २६ | |
| ६ | ता वां वास्तू (या ते धामा) | ६,३ | ६, ३ | |
| १६२।१ | मा नो मित्रो | २५,२४ | २७,२८ | |
| २ | यन्निर्णिजा | २५ | २९ | |
| ३ | एष च्छागः | २६ | ३० | |
| ४ | यद्धविष्य | २७ | ३१ | |
| ५ | होताध्वर्यु | २८ | ३२ | |
| ६ | यूपव्रस्का | २९ | ३३ | |
| ७ | उप प्रागात् सुमन्मे | ३० | ३४ | |
| ८ | यद्वाजिनो | ३१ | ३५ | |
| ९ | यदश्वस्य | ३२ | ३६ | |
| १० | यदूवध्य | ३३ | ३७ | |
| ११ | यत्ते गात्राद् | ३४ | ३८ | |
| १२ | ये वाजिनं | २५,३५ | २७,३९ | दीर्घतमाः |
| १३ | यन्नीक्षणं | ३६ | ४० | |
| १४ | निक्रमणं | ३८ | ४२ | |
| १५ | मा त्वाग्नि | ३७ | ४१ | |
| १६ | यदश्वाय | ३९ | ४३ | |
| १७ | यत्ते सादे | ४० | × | |
| १८ | चतुस्त्रिंश | ४१ | × | |
| १९ | एकस्त्वष्टु | ४२ | × | |
| २० | मा त्वा तपत् | ४३ | × | |
| २१ | न वा उ एत | २३,१६ | २५,१८ | |
| | | २५,४४ | × | |
| २२ | सुगव्यं नो | २५,४५ | × | |
| १६३।१ | यदक्रन्दः | २९,१२ | ३१,२४ | |
| २ | यमेन दत्तं | १३ | २५ | |
| ३ | असि यमो | १४ | २६ | |
| ४ | त्रीणि त आहु | १५ | २७ | |
| ५ | इमा ते वाजि | १६ | २८ | |
| ६ | आत्मानं ते | १७ | २९ | |
| ७ | अत्रा ते रूप | १८ | ३० | |
| ८ | अनु त्वा रथो | १९ | ३१ | |
| ९ | हिरण्यशृङ्गो | २० | ३२ | |
| १० | ईर्मान्तासः | २१ | ३३ | |
| ११ | तव शरीरं | २२ | ३४ | |
| १२ | उप प्रागाच्छसनं | २३ | ३५ | |
| १३ | उप प्रागात् परमं | २४ | ३६ | |
| १६४।३१ | अपश्यं गोपा | ३७,१७ | ३७,१७ | |
| ३४ | पृच्छामि त्वा परमंतं | २३,६१ | २५,६३ | |
| ३५ | इयं वेदिः | ६२ | ६४ | |
| ४१ | एकपदी द्विपदी | ८,३० | ९,२९ | |
| ४९ | यस्ते स्तनः | ३८, ५ | ३८, ५ | |
| ५० | यज्ञेन यज्ञ | ३१,१६ | ३५,१६ | |
| १६५।३ | कुतस्त्वमिन्द्र | ३३,२७ | ३२,२७ | मरुतः |
| ४ | ब्रह्माणि मे | ७८ | ७८ | इन्द्रः |
| ९ | अनुत्तमा | ७९ | ७९ | मरुतः |
| १५ | एष वः स्तोमो | ३४,४८ | ३३,३६ | अगस्त्यः |
| १७३।१२ | मो षू ण इन्द्र | ३,४६ | ३,५४ | |
| १८६।१ | आ न इळा | ३३,३४ | ३२,३४ | |
| १८७।१ | पितुं नु स्तोषं | ३४, ७ | ३३, २ | |

| सू० मं० | मन्त्रः | वा० य० | का० य० | ऋषिः |
|---|---|---|---|---|
| १८९।१ | अग्ने नय | ५,३६ | ५,४५ | अगस्त्यः |
| | | ७,४३ | ९, ८ | |
| १८९।१ | अग्ने नय | ४०,१६ | ४०,१८ | अगस्त्यः |
| १९१।८ | सर्वाञ्जम्भयन्त्सर्वा | १६, ५ | १७, ५ | |

# द्वितीयं मण्डलम्।

| सू० मं० | मन्त्रः | वा० य० | का० य० | ऋषिः |
|---|---|---|---|---|
| १। १ | त्वमग्ने द्युभिः | ११,२७ | १२,२७ | गृत्समदः |
| ३।११ | घृतं मिमिक्षे | १७,८८ | १९, २ | |
| ६। ४ | स बोधि सूरि | ११,४३ | १२,४४ | सोमाहुतिः |
| ७। ६ | द्रवन्नः सर्पि | ११,७० | १२,७१ | |
| ९। १ | नि होता होतृ | ३६ | ३६ | गृत्समदः |
| ३ | विधेम ते | १७,७५ | १८,७५ | |
| १०। ४ | जिघर्म्यग्निं | ११,२३ | १२,२३ | |
| ५ | आ विश्वतः | २४ | २४ | |
| २३। १ | गणानां त्वा | २३,१९ | २५,११ | |
| १५ | बृहस्पते अति | २६, ३ | २८, ४ | |
| १९ | ब्रह्मणस्पते | ३४,५८ | ३३,४६ | |
| २७। १ | इमा गिरः | ३४,५४ | ३३,४९ | कूर्मो वा |
| २९। ६ | अर्वाञ्चो अद्या | ३३,५१ | ३२,५१ | गृत्समदः |
| ३२। ६ | सिनीवालि | ३४,१० | ३३, ४ | |
| ३३।१४ | परि णो हेती | १६,५० | १७,५० | |
| ४१। १ | वायो ये ते | २७,३१ | २९,२७ | |
| २ | नियुत्वान् | २९ | २९ | |
| ४ | अयं वां | ७, ९ | ७, ८ | |
| ७ | गोमद् षु | २०,८१ | २१,६६ | |
| ८ | न यत्परो | ८२ | ६७ | |
| ९ | ता न आ वोळ्ह | ८३ | ६८ | |
| १३ | विश्वे देवास | ७,३४ | ७,३४ | |

# तृतीयं मण्डलम्।

| सू० मं० | मन्त्रः | वा० य० | का० य० | ऋषिः |
|---|---|---|---|---|
| २। ७ | आ रोदसी | ३३.७५ | ३२,७५ | विश्वामित्रः |
| ५।११ | इळामग्ने | १२,५१ | १३,५१ | |
| ६।११ | ,, | ,, | ,, | |
| ७।११ | ,, | ,, | ,, | |
| ९। ९ | त्रीणि शता | ३३, ७ | ३२, ७ | |
| १०। ९ | विप्रा विपन्यवो | ३४,४४ | ३३,३१ | |
| ११। २ | स हव्यवाळ | २२,१६ | २४,२० | |
| १२। १ | इन्द्राग्नी आ | ७,३१ | ७,३१ | |
| १४। ५ | वयं ते अद्य | १८,७५ | २०,४४ | |
| १५। १ | वि पाजसा | ११,४९ | १२,५० | |
| २२। १ | अयं सो अग्नि | १२,४७ | १३,४८ | |
| २ | अग्ने यत्ते दिवि | ४८ | ४९ | |
| ३ | अग्ने दिवो | ४९ | ५० | |
| ४ | पुरीष्यासो | ५० | ५१ | |
| ५ | इळामग्ने | ५१ | ५२ | |
| २४। १ | अग्ने सहस्व | ९,३७ | ११, ३ | |
| २६। ७ | अग्निरस्मि | १८,६६ | × | |
| २९। ३ | उत्तानायां | ३४,१४ | ३३, ८ | |
| ४ | इळायास्त्वा | १५ | ९ | |
| २९। ८ | सीद होतः | ११,३५ | १२,३५ | विश्वामित्रः |
| १० | अयं ते योनि | ३,१४ | ३,१० | |
| | | १२,५२ | १३,५३ | |
| | | १५,५६ | १६,७८ | |
| ३०। १ | इच्छन्ति त्वा | ३४,१८ | ३३,१२ | |
| २ | न ते दूरे | १९ | १३ | |
| ८ | सहदानुं | १८,६९ | २०,३८ | |
| ९ | अस्तभ्नाद्द्यां | ४,३० | ४,४२ | |
| ३१। ६ | विदद्यदी | ३३,५९ | ३२,५९ | |
| ३४। ३ | इन्द्रो वृत्रम | २६ | २६ | |
| ३५। ६ | तवायं सोम | २६,२३ | -× | |
| ३७। १ | वार्त्रहत्याय | १८,६८ | २०,३७ | |
| ३८। ४ | आतिष्ठन्तं | ३३,२२ | ३२,२२ | |
| ४५। १ | आ मन्द्रैरिन्द्र | २०,५३ | २२,३८ | |
| ४७। १ | मरुत्वाँ इन्द्र | ७,३८ | २८,१० | |
| २ | सजोषा इन्द्र | ७,३७ | ७,३८ | |
| ४ | ये त्वाहिहत्ये | ३३,६३ | ३२,६३ | |
| ५ | मरुत्वन्तं | ७,३६ | ७,३६ | |
| ५१। ७ | इन्द्र मरुत्व | ३५ | ३५ | |

| सू० | मं० | मन्त्रः | वा० य० | का० य० | ऋषिः |
|---|---|---|---|---|---|
| ५२। | १ | धानावन्तं | २०,२९ | २२,१४ | विश्वामित्रः |
| ५९। | ६ | मित्रस्य चर्षणी | ११,६२ | १२,६४ | |
| ६२। | १० | तत्सवितु | ३,३५ | ३,४३ | |
| | | | २२, ९ | २४,१३ | |
| ६२। | १० | तत्सवितु | ३०, २ | ३४, २ | विश्वामित्रः |
| | | | ३६, ३ | ३६, ३ | |
| | १६ | आ नो मित्रा | २१, ८ | २३, ८ | जमदग्निर्वा |

# चतुर्थं मण्डलम् ।

| सू० | मं० | मन्त्रः | वा० य० | का० य० | ऋषिः |
|---|---|---|---|---|---|
| १। | ४ | त्वं नो अग्ने वरुण | २१, ३ | २३, ३ | वामदेवः |
| | ५ | स त्वं नो अग्ने | ४ | ४ | |
| | २० | विश्वेषाम | ३३,१६ | ३२,१६ | |
| २। | १६ | अधा यथा नः | १९,६९ | २१,६९ | |
| ४। | १ | कृणुष्व पाजः | १३, ९ | १४, ९ | |
| | २ | तव भ्रमास | १० | १० | |
| | ३ | प्रति स्पशो | ११ | ११ | |
| | ४ | उदग्ने तिष्ठ | १२ | १२ | |
| | ५ | ऊर्ध्वो भव | १३ | १३ | |
| ७। | १ | अयमिह | ३,१५ | ३,२१ | |
| | | | १५,२६ | १६,४७ | |
| | | | ३३, ६ | ३२, ६ | |
| ९। | ८ | परि ते दूळभो | ३,३६ | ३,४४ | |
| १०। | १ | अग्ने तमद्या | १५,४४ | १६,६६ | |
| | | | १७,७७ | १८,७७ | |
| | २ | अधा ह्यग्ने | १५,४५ | १६,६७ | |
| | ३ | एभिर्नो अर्कै | ४६ | ६८ | |
| १५। | ३ | परि वाजपतिः | ११,२५ | १२,२५ | |
| २०। | १ | आ न इन्द्रो दूरादा | २०,४८ | २२,३३ | |
| | २ | आ न इन्द्रो हरिभिः | ४९ | ३४ | |
| २१। | १ | आ यात्विन्द्रो | ४७ | ३२ | |
| ३१। | १ | कया नश्चित्र | २७,३९ | २९,४४ | |
| | | | ३६, ४ | ३६, ४ | |
| | २ | कस्त्वा सत्यो | २७,४० | २९,४५ | |
| | | | ३६, ५ | ३६, ५ | |
| ३१। | ३ | अभी षु णः | २७,४१ | २९,४६ | वामदेवः |
| | | | ३६, ६ | ३६, ६ | |
| ३२। | १ | आ तू न | ३३,६५ | ३२,६५ | |
| ३९। | ६ | दधिक्राव्णो | २३,३२ | २५,३४ | |
| ४०। | ३ | उत स्मास्य | ९,१५ | १०,२१ | |
| | ४ | उत स्य वाजी | १४ | २० | |
| | ५ | हंसः शुचिषद् | १०,२४ | ११,३४ | |
| | | | १२,१४ | १३,१५ | |
| ४२। | १० | राया वयं | ७,१० | ७, ९ | त्रयदस्युः |
| ४७। | १ | वायो शुक्रो | २७,३० | २९,३० | वामदेवः |
| ५०। | ६ | वयं स्याम (पा. ४) | ३३,६५ | | |
| ५४। | २ | देवेभ्यो हि | ३३,५४ | ३२,५४ | |
| ५७। | ८ | शुनं नः फाला | १२,६९ | १३,७० | |
| ५८। | १ | समुद्रादूर्मि | १७,८९ | १९, ३ | |
| | २ | वयं नाम | ९० | ४ | |
| | ३ | चत्वारि शृङ्गा | ९१ | ५ | |
| | ४ | त्रिधा हितं | ९२ | ६ | |
| | ५ | एता अर्षन्ति | ९३ | ७ | |
| | ६ | सम्यक्स्रवन्ति | १३,३८ | १४,४० | |
| | | | १७,९४ | १९, ७ | |
| | ७ | सिन्धोरिव | ९५ | ८ | |
| | ८ | अभि प्रवन्त | ९६ | ९ | |
| | ९ | कन्या इव | ९७ | १० | |
| | १० | अभ्यर्षत | ९८ | ११ | |
| | ११ | धामन्ते विश्वं | ९९ | १२ | |

# पंचमं मण्डलम् ।

| सू० | मं० | मन्त्रः | वा० य० | का० य० | ऋषिः |
|---|---|---|---|---|---|
| १। | १ | अबोध्यग्निः | १५,२४ | १६,४५ | बुधगविष्ठिरौ |
| | १२ | अवोचाम | २५ | ४६ | |
| ५। | १ | सुसमिद्धाय | ३, २ | ३, २ | वसुश्रुतः |
| ६। | १ | अग्निं तं मन्ये | १५.४१ | १६,६३ | |
| | २ | सो अग्निर्यो | ४२ | ६४ | |
| ६। | ९ | उभे सुश्चन्द्र | १५,४३ | १६,६५ | वसुश्रुतः |
| ७। | १ | सखायः सं वः | २९ | ५० | इषः |
| ११। | १ | जनस्य गोपा | २७ | ४८ | सुतंभरः |
| | ६ | त्वामग्ने अङ्गिरसो | २८ | ४९ | |
| १४। | १ | अग्निं स्तोमेन | २२,१५ | २४,१९ | |

| सू० | मं० | मन्त्रः | वा० य० | का० य० | ऋषिः |
|---|---|---|---|---|---|
| २०। | १ | यमग्ने वाज | १९,६४ | २१,६४ | प्रयस्वन्तः |
| २४। | १ | अग्ने त्वं नो | ३,२५ | ३,३३ | बन्धुः सुबंधुः |
| | | | १५,४८ | १६,७० | |
| | | | २५,४७ | २७,४५ | |
| | २ | वसुरग्निः | ३,२५ | ३,३३ | |
| | | | १५,४८ | १६,७० | |
| | | | २५,४७ | २७,४५ | |
| | ३ | स नो बोधि | ३,२६ | ३,३४ | |
| | ४ | तं त्वा शोचिष्ठ | ३,२६ | ३,३४ | |
| | | | १५,४८ | १६,७० | |
| | | | २५,४७ | २७,४५ | |
| २५। | ७ | यद्वाहिष्ठं | २६,१२ | × | वसूयवः |
| २६। | १ | अग्ने पावक | १७, ८ | १८, ९ | |
| | ३ | वीतिहोत्रं | २, ४ | २, ५ | |
| २८। | ३ | अग्ने शर्ध | ३३,१२ | ३२,१२ | विश्ववारो |
| ३३। | ३ | न ते त इन्द्रा | १०,२२ | ११,३२ | संवरणः |

| सू० | मं० | मन्त्रः | वा० य० | का० य० | ऋषिः |
|---|---|---|---|---|---|
| ४२। | ४ | समिन्द्र णो मनसा | ८,१५ | ९,१५ | अत्रिः |
| ४४। | १ | तं प्रत्नथा पूर्व | ७,१२ | ७,११ | अवत्सारः |
| ४६। | २ | अग्न इन्द्र वरुण | ३३,४८ | ३२,४८ | प्रतिक्षत्रः |
| | ३ | इन्द्राणी मित्रा | ४९ | ४६ | |
| ४७। | ३ | उक्षा समुद्रो | १७,६० | १८,६० | प्रतिरथः |
| ५०। | १ | विश्वो देवस्य | ४, ८ | ४, ९ | स्वस्तिः |
| | | | ११,६७ | १२,६८ | |
| | | | २२,२१ | २४,२९ | |
| ५५। | १० | वयं स्याम (पा.४) | १९,४४ | २१,४६ | श्यावाश्वः |
| ६२। | ८ | हिरण्यरूपमुषसो | १०,१६ | ११,२४ | श्रुतविदा |
| ८१। | १ | युञ्जते मन उत | ५,१४ | ५,१९ | श्यावाश्वः |
| | | | ११. ४ | १२, ४ | |
| | | | ३७, २ | ३७, २ | |
| | २ | विश्वा रूपाणि | १२, ३ | १३, ३ | |
| | ३ | यस्य प्रयाणम | ११, ६ | १२, ६ | |
| ८२। | ५ | विश्वानि देव | ३०, ३ | ३४, ३ | |
| ८५। | २ | वनेषु व्यन्तरिक्षं | ४,३१ | ४,४३ | अत्रिः |

## षष्ठं मण्डलम्।

| सू० | मं० | मन्त्रः | वा० य० | का० य० | ऋषिः |
|---|---|---|---|---|---|
| ४। | ७ | त्वां हि मन्द्रतम | ३३,१३ | ३२,१३ | भरद्वाजः |
| ५। | ७ | अश्याम तं | १८,७४ | २०,४३ | |
| ७। | १ | मूर्धानं दिवो | ७,२४ | ७,२६ | |
| | | | ३३, ८ | ३२, ८ | |
| १५। | ५ | पावकया | १७,१० | १८,११ | वीतहव्यः वा |
| १६। | ११ | तं त्वा समिद्भि | ३, ३ | ३, ३ | भरद्वाजः |
| | १३ | त्वामग्ने पुष्क | ११,३२ | १२,३२ | |
| | | | १५,२२ | १६,४३ | |
| | १४ | तमु त्वा दध्यङ् | ११,३३ | १२,३३ | |
| | १५ | तमु त्वा पाथ्यो | ३४ | ३४ | |
| | १६ | एह्यू षु ब्रवाणि | २६,१३ | × | |
| | २८ | अग्निस्तिग्मेन | १७,१६ | १८,१६ | |
| | ३४ | अग्निर्वृत्राणि | ३३, ९ | ३२, ९ | |
| | ४३ | अग्ने युक्ष्वा हि | १३,३६ | १४,३८ | |
| १९। | १ | महाँ इन्द्रो | ७,३९ | ७,३९ | |
| ४६। | १ | त्वामिद्धि हवामहे | २७,३७ | २९,४२ | शंयुः |
| | २ | स त्वं नश्चित्र | ३८ | ४३ | |
| ४७। | ११ | त्रातारमिन्द्र | २०,५० | २२,३५ | गर्गः |
| | १२ | इन्द्रः सुत्रामा | ५१ | ३६ | |

| सू० | मं० | मन्त्रः | वा० य० | का० य० | ऋषिः |
|---|---|---|---|---|---|
| | १३ | तस्य वयं | २०,५२ | २२,३७ | |
| | २६ | वनस्पते | २९,५२ | ३१,२० | |
| | २७ | दिवस्पृथिव्याः | ५३ | × | |
| | २८ | इन्द्रस्य वज्रो | ५४ | × | |
| | २९ | उप श्वासय | ५५ | ३१,१२ | |
| | ३० | आ क्रन्दय | ५६ | × | |
| | ३१ | आमूरज | ५७ | × | |
| ४८। | १ | यज्ञायज्ञा वो | २७,४२ | २९,४७ | शंयुः |
| | २ | ऊर्जो नपातं | ४४ | ४८ | |
| ४९। | ४ | प्र वायुमच्छा | ३३,५५ | ३२,५५ | ऋजिश्वा |
| | ८ | पथस्पथः | ३४,४२ | ३३,३० | |
| ५०। | १४ | उत नोऽहि | ५३ | ४१ | |
| ५२। | ७ | विश्वे देवास | ७,३४ | ७,३४ | |
| | ९ | उप नः सूनवो | ३३,७७ | ३२,७७ | |
| | १३ | विश्वे देवाः | ५३ | ५३ | |
| ५४। | ९ | पूषन्तव | ३४,४१ | ३३,२९ | भरद्वाजः |
| ५९। | ६ | इन्द्राग्नी अपादियं | ३३,९३ | × | |
| ६०। | ५ | उभा विघ्नता | ६१ | ३२,६१ | |
| | १३ | उभा वामिन्द्राग्नी | ३,१३ | ३,११ | |

| सू० मं० | मन्त्रः | वा० य० | का० य० | ऋषिः |
|---|---|---|---|---|
| ७०। १ | घृतवती | ३४,४५ | ३३,३३ | |
| ७१। ३ | अदब्धेभिः | ३३,६९ | ३२,६९ | |
| | | ८४ | ८४ | |
| ६ | वाममद्य | ८, ६ | ८, ५ | |
| ७५। १ | जीमूतस्येव | २९,३८ | ३१,१३ | पायुः |
| २ | धन्वना गा | ३९ | १४ | |
| ३ | वक्ष्यन्तीवेदा | ४० | १६ | |
| ४ | ते आचरन्ती | ४१ | १५ | |
| ५ | बह्वीनां पिता | ४२ | १८ | |
| ६ | रथे तिष्ठन्नयति | ४३ | २१ | |
| ७ | तीव्रान्घोषान् | ४४ | × | |
| ८ | रथवाहनं | २९,४५ | × | |
| ९ | स्वादुषंसदः | ४६ | × | |
| १० | ब्राह्मणासः | ४७ | × | |
| ११ | सुपर्णं वस्ते | ४८ | १९ | |
| १२ | ऋजीते परि | ४९ | × | |
| १३ | आ जङ्घन्ति | ५० | २२ | |
| १४ | अहिरिव | ५१ | १७ | |
| १६ | अवसृष्टा परा | १७,४५ | १८,४५ | |
| १७ | यत्र बाणाः | ४८ | ४८ | |
| १८ | मर्माणि ते | ४९ | ४९ | |

## सप्तमं मण्डलम्।

| सू० मं० | मन्त्रः | वा० य० | का० य० | ऋषिः |
|---|---|---|---|---|
| १। ३ | प्रेद्धो अग्ने | १७,७६ | १८,७६ | वसिष्ठः |
| २। २ | नराशंसस्य | २९,२७ | × | |
| ३। २ | प्रोथदश्वो | १५,६२ | १८,६३ | |
| ८। ४ | प्रप्रायमग्निः | १२,३४ | १३,३५ | |
| १६। १ | एना वो अग्निं | १५,३२ | १६,५४ | |
| २ | स योजते | ३३ | १५ | |
| | | ३४ | ५६ | |
| ७ | त्वे अग्ने स्वाहुत | ३३,१४ | ३२,१४ | |
| २३। ४ | आपश्चित्पिप्युः | १८ | १८ | |
| ६ | एवेदिन्द्रं | २०,५४ | २२,३९ | |
| ३२।२२ | अभि त्वा शूर | २७,३५ | २९,४० | |
| २३ | न त्वावाँ अन्यो | ३६ | ४१ | |
| ३५। १ | शं न इन्द्राग्नी | ३६,११ | ३६,११ | |
| ३८। ७ | शं नो भवन्तु | ९,१६ | १०,२२ | |
| | | २१,१० | २३,१० | |
| ८ | वाजेवाजेऽवत | ९,१८ | १०,२४ | |
| | | २१,११ | २३,१८ | |
| ३९। २ | प्र वायुजे | ३३,४४ | ३२,४४ | |
| ४१। १ | प्रातरग्निं | ३४,३४ | × | |
| ४१। २ | प्रातर्जितं | ३४,३५ | ३३,१८ | |
| ३ | भग प्रणेत | ३६ | × | |
| ४ | उतेदानीं | ३७ | × | |
| ५ | भग एव | ३८ | × | |
| ६ | समध्वरा | ३९ | × | |
| ७ | अश्वावती | ४० | × | |
| ५९।१२ | त्र्यम्बकं यजा | ३,६० | ३,६८ | |
| ६२। ५ | प्र बाहवा | २१, ९ | २३, ९ | |
| ६६। ४ | यदद्य सूर | ३३,२० | ३२,२० | |
| १६ | तच्चक्षुर्देव | ३६,२४ | ३६,२४ | |
| ७४। ३ | आ यातमुप | ३३,८८ | × | |
| ९०। १ | प्र वीरया | ७० | ३२,७० | |
| ३ | राये नु यं | २७,२४ | २९,२४ | |
| ९१। ३ | पीवोअन्नाँ (न्ना) | २३ | २३ | |
| ९२। १ | आ वायो भूष | ७, ७ | ७, ६ | |
| ३ | प्र याभिर्यासि | २७,२७ | २९,२६ | |
| ५ | आ नो नियुद्भिः | २८ | ३१ | |
| ९४।११ | उक्थेभिर्वृत्र | ३३,७६ | ३२,७६ | |
| ९९। ३ | इरावती | ५,१६ | ५,२१ | |

## अष्टमं मण्डलम्।

| सू० मं० | मन्त्रः | वा० य० | का० य० | ऋषिः |
|---|---|---|---|---|
| ३। ३ | इमा उ त्वा | ३३,८१ | ३२,८१ | मेध्यातिथिः |
| ४ | अयं सहस्र | ८३ | ८३ | |
| ८ | अस्येदिन्द्रो | ९७ | × | |
| ६। १ | महाँ इन्द्रो | ७,४० | ७,४० | वत्सः |
| १८ | उपह्वरे | २६,१५ | × | |
| ११। १ | त्वमग्ने व्रत | ४,१६ | ४,११ | |

